THE KUPPUSWAMI SASTRI
RESEARCH INSTITUTE,
MADRAS.

Sri Vani Vilas Sanskrit Series

No. 7.

# KAMALINI KALAHAMSA

OF

SRI RAJACHUDAMANI DIKSHITA.



SRIRANGAM:
SRI VANI VILAS PRESS.
1917.

॥ श्रीः ॥

# ॥ कमलिनीकलहंसम् ॥

दन्तिद्योतिदिव्यप्रदीपाद्यविश्वामित्रवंशमुक्ताफलसर्वतन्त्रस्वतन्त्रश्रीकृष्ण-
भट्टपौत्रलक्ष्मीभवस्वामिभट्टानुजाध्वरिजिद्दीक्षितराजयाजिश्रीसत्यमङ्गल-
रत्नखेटश्रीनिवासदीक्षिततनयेन कामाक्षीगर्भसंभवेन श्रीमदर्ध-
नारीश्वरदीक्षितगुरुचरणसहजतालब्धविद्यावैशारद्येन

**श्रीराजचूडामणिदीक्षितेन**

विरचितम् ।



श्रीरङ्गस्थ
**श्रीवाणीविलासमुद्राक्षरालये**
संमुद्रितम् ।
१९१०.

# PREFACE.

THIS is a hitherto unpublished Drama by one Rajachudamani Dikshita who flourished in the first part of the seventeenth century. He was a prolific writer and a sketch of himself and the names of the twenty-four works composed by him are herein given in Sanskrit by Mr. T. S. Kuppusvami Sastrigal, culled from all available sources. His style, it will be observed, is very pleasant reading and we hope to publish, in course of time, some more of his works and thereby popularise him.

We had the help of two Manuscripts, one from Tanjore and another from Madras and in the matter of collating them and editing this work we had the hearty co-operation of Pandit S. Subrahmanya Sastrigal of Tanjore.

*T. K. Balasubrahmanyam.*

॥ श्रीः ॥

# ॥ श्रीराजचूडामणिदीक्षितः ॥

---

आसीद्विश्वविश्रुतवैदुष्यो दक्षिणदेशाभिजनः षड्दर्शनीपार-
दृश्वा षड्भाषासार्वभौमः आप्तिचिद्विश्वजिदतिरात्रयाजी कर्ता
भावनापुरुषोत्तमाद्यष्टादशरूपकाणाम् , निर्माता शतकंधरविज-
यादिषष्टिकाव्यानाम् , प्रणेता साहित्यसंजीवनाद्यलंकारग्रन्थानाम् ,
आधाता वेदान्तरत्नावलीवादतारावलीमध्वविध्वंसनबौद्धविध्वंसन-
मणिदर्पणाद्वैतकौस्तुभविधिनिर्णयसर्वसमग्रसर्वस्वस्मृतिरत्नप्रदीपपद्म-
भङ्गव्याख्यानादीनाम् , परिशुद्धितत्त्वावबोधानेकशाखाकरणवि-
चक्षणः, वापीकूपतटाकमहारप्रतिष्ठापकः, भवस्वामिभाष्यकर्तु-
र्भवस्वामिसोमयाजिनः षष्ठः, अनवरतान्नदायिनः प्रतिदिनप्रबन्ध-
परमेश्वरस्य कृष्णसोमपीथिनः पञ्चमः, अद्वैतचिन्तामणिकर्तुः
कुमारभवस्वामिसोमयाजिनो नप्ता, सोमयाजिनः कृष्णभट्टस्य
पौत्रः, वैकुण्ठघण्टामणेः परमभागवतस्य भवस्वामिभट्टस्य
लक्ष्म्याश्च पुत्रः, विश्वामित्रवंशमुक्तामणिः, कृष्णपरिव्राजकार्य-
चरणारविन्दपरिचरणलब्धविद्याधिपत्यः, तत्तद्दशासकलविद्याचम-
त्कृतव्याख्यानोपन्यासकौशलेन चोलभूवल्लभेनास्थानीविरचित-
पत्रावलम्बः, मत्तहस्तावलम्ब्यस्तदिवाप्रदीपचिह्नः, प्रतिभटावर्जन-
विजयतोषितराजन्यपारितोषिकलब्धचरणकटकच्छत्रचामरादिबिरुदः,
तुण्डीरमण्डलान्तर्वर्तिशूरसमुद्राभिधानाग्रहारवास्तव्यः, सत्यमङ्गल-
रत्नखेटश्रीनिवासाध्वरीति सुप्रसिद्धाभिधानः, शतावधानीत्यपराभि-

धातो भट्टाचार्यः पण्डितोत्तमः । यमधिकृत्येदं प्रशंसापद्यमपि श्रूयते—

'विपश्चितामपश्चिमे विवादकेलिनिश्चले
सपक्षजित्ययक्षमेव रत्नखेटदीक्षिते ।
बृहस्पतिः क जल्पति प्रसर्पति क सर्वरा-
डसम्मुखश्च षण्मुखश्चतुर्मुखश्च दुर्मुखः ॥' इति ।

'संचारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥' ( रघु. ६. ६७. )

इति वर्णनात्कालिदासस्य यथा दीपशिखाकालिदास इति,

'उदयति विततोर्ध्वरश्मिरज्जा-
वहिमकरे हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥ ( शिशु. ४. २०. )

इत्यहिमकरहिमकरयोर्घण्टाद्वयत्वेन वर्णनान्माघस्य यथा घण्टामाघ इति,

'उत्फुल्लस्थलनलिनीवनादमुष्मा-
दुद्धूतः सरसिजसंभवः परागः ।
वात्याभिर्वियति विवर्तितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥' (किरात. ५. ३९.)

इति परागस्य विवर्तितस्य कनकमयातपत्रत्ववर्णनाच्छत्रभारवि-
रिति यथा भारवेः,

'दधिमथननिलोलत्लोलदृग्वेणिदम्भा-
दयमदयमनङ्गो विश्वविश्वैकजेता ।
भवपरिभवकोपत्यक्तबाणः कृपाण-
श्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्ति ॥'

(बालभारते, आदिपर्वणि ११. ६.)

इति तस्याः कृपाणत्वेन वर्णनावसरस्य यथा च वेणीकृपाणोऽमर इति महती लोके प्रसिद्धिः, तथा

'अन्योन्यसमरलीलालालसपूर्वापराद्रिशूराभ्याम् ।
धृतरत्नखेटशङ्कां तन्वाते सुमुखि पुष्पवद्बिम्बौ ॥'

(भावनापुरुषोत्तमनाटके ४ अङ्के)

इति दिवाकरनिशाकरबिम्बयो रत्नखेटत्ववर्णनादस्य रत्नखेटश्रीनिवासाध्वरीति प्रथीयसी प्रथेति श्रूयते ।

राजचूडामणिदीक्षितनिर्वर्तितस्य रुक्मिणीपरिणयकाव्यस्य व्याख्यानारम्भे व्याख्याता बालयज्ञवेदेश्वर एवमभिधत्ते—

'संख्यासंधुक्षिताम्भोधरतडित्कगणाद्बुद्बुदान्तःसखण्डां-
स्फाराकाराशिरांशुं शशिरविकपटाद्बिभ्रतौ रत्नखेटौ ।
अन्योन्यं युध्यमानावुदयचरमभूभृत्प्रवीराविति द्रा-
गुक्त्या ख्यातापराख्यः क्षितिपतिवचसा रत्नखेटाध्वरीति ॥'

इति.

अस्य रत्नखेटाध्वरी रत्नखेटश्रीनिवासाध्वरीत्युभयथापि भूयान्व्यवहारः संदृश्यते ग्रन्थेषु । अस्य पूर्वैरनेनापि बाल्ये अद्यावधि वर्तमानेनाध्युषितोऽमहदूरस्तुण्डीरेषु चेञ्जीपुरात्सन्निमतः कोशत्रयमात्रासन्नः सत्यमङ्गलाभिधः । विद्वज्जनमूर्धन्येनानेन प-

आस्थानासनया परिगृहीतोऽग्रहारः शूरसमुद्राभिधानः । श्रीमन्म-णिनागपुरवराधीश्वरेण कर्णाटसिंहासनप्रतिष्ठापकाचार्येण पोतना-यकस्य वेङ्कटाम्बायाश्च पुत्रेण दिवाकरभैरवनायकयोरग्रजेन शूरप्प-नायकेन प्रयत्नपूर्वकं निर्माय विप्रसात्कृतेषु वेङ्कटापुरशोतसमुद्रशू-रसमुद्राभिधेष्वग्रहारेष्वन्तिमश्च । अस्यैव शूरप्पनायकस्याशयमनु-रुन्धानो रत्नखेटदीक्षितो भावनापुरुषोत्तमं नाटकमकार्षीत् । नाटकस्यावसाने पद्यमिदं दृश्यते यथा—

'सर्वधारिसमे मीनमासे राकातिथाविदम् ।
उत्तरर्क्षे रविदिने समाप्तं नाटकं परम् ॥' इति ।

अनेन प्रबन्धनिष्पत्तिकालः (१५८८ तमः क्रिस्ताब्दः) सर्व-धारिसंवत्सर इति वक्तुं न दुःशकम् । परं तु पद्यमिदं ग्रन्थकार-स्याहोस्विल्लेखकस्येति न विजानीमः । रत्नखेटदीक्षितस्य त्रयः पुत्रा अभूवन् । तेषु ज्येष्ठः केशवदीक्षितः । स्वगुरौ केशवयोगिवर्ये परमया भक्त्या तन्नामानममुं चकार पिता । तथा चोक्तम्—

'यः श्रीकेशवयोगिवर्यचरणाद्यं पूर्णपाशाभिधाना
मन्त्रं सिद्धमवाप्य दिव्यमथ तत्सिद्ध्यै तपस्यन्पुनः ।
नित्याध्युक्षितदेवतां जगदिदं कर्तुं च हर्तुं क्षमां
सिद्धिं प्राप्य निजान्वये निजसुताग्र्येषु तस्याभिधाम् ॥'

इति रुक्मिणीपरिणयव्याख्याने । ज्येष्ठः केशवदीक्षितस्तदितर-योरर्धनारीश्वरराजचूडामणिदीक्षितयोः कामाक्षीगर्भसंभवयोः सो-दरयोर्वैमात्रेयो भ्राता । तयोः पार्थक्येनेश्वरदीक्षितचूडामणिदीक्षि-तावित्यपि प्रचलति व्यपदेशः प्रबन्धेषु । राजचूडामणिदीक्षितस्य यज्ञनारायण इति पित्रा दत्तं सांस्कारिकं नामधेयम् । उक्तं च—

'पिता श्रीयज्ञनारायण इति भवितोऽप्यद्भुतैः स्वैश्चरित्रैः प्रख्यातिं राजचूडामणिरिति महतीमाप भूपप्रवेकात् ।'

( इति रुक्मिणीपरिणयव्याख्यानारम्भे ।)

राजचूडामणिदीक्षितस्य शैशव एव वयसि पिता देवादपाह्रियत धात्रीतलात् । माता च तमनुजगाम । अर्धनारीश्वरदीक्षितः कनीयांसं सोदरं सर्वाण्यपि शास्त्राणि ग्राहयामास । उपनयनात्प्रागेव राजचूडामणिना समुत्तीर्णः सर्वोऽपि काव्यमार्गः । प्रक्रान्तं च काव्यानि कर्तुं रसयितुं च । स्वप्रणीतान्प्रबन्धानस्वयमेव परिगणयति राजचूडामणिदीक्षितः काव्यदर्पणस्यावसाने । अनेन संदृब्धाः प्रबन्धाः:— १. यजुःशाखाव्याख्या, २. दशोपनिषद्व्याख्याः, ३. शास्त्रदीपिकाव्याख्या कर्पूरवर्तिका, ४. द्वादशलक्षणीव्याख्या तन्त्रशिखामणिः, ५. संकर्षमुक्तावलिः, ६. नित्याग्निहोत्रादेर्निष्कृतिरूपिका प्रायश्चित्तप्रदीपिका, ७. कविवृत्तप्रवृत्तिन्यायचूडामणिः, ८. पार्थसारथिमिश्रप्रणीतस्य चिन्तामणेर्व्याख्यानं चिन्तामणिदर्पणम्, ९. शृङ्गारसर्वस्वनामा भाणः, १०. भोजचम्पूपूरको युद्धकाण्डः, ११. भारतचम्पूः, १२. वृत्ततारावलिः, १३. रत्नखेटश्रीनिवासदीक्षितस्य चरितं रत्नखेटविजयम्, १४. मञ्जुभाषिणी नाम रामकथा, १५. मञ्जुलैः श्लिष्टद्व्यर्थपदैः पद्यैः संदृब्धा रामकृष्णधर्मभुवां कथावर्गा, १६. शंकरार्यतारावली, १७. शंकराभ्युदयम्, १८. कंसवधम्, १९. रुक्मिणीपरिणयम्, २०. कमलिनीकलहंसनाटिका, २१. आनन्दराघवनाटकम्, २२. अलंकारचूडामणिः, २३. चित्रमञ्जरी, २४. काव्यदर्पण इति ।

रघुनाथभूपविजय-कान्तिमतीपरिणय-साहित्यसाम्राज्याभि-

अमूनि त्रीण्यपि काव्यानि राजचूडामणिदीक्षितप्रणीतानीति व्याहृरति रुक्मिणीपरिणयव्याख्यानस्यारम्भे बालयज्ञवेदेश्वरः । काव्यदर्पणकरणात्परं काव्यानीमानि चूडामणिना कृतानि स्युः ।

गोविन्ददीक्षितनन्दनेन यज्ञनारायणदीक्षितेन विरचितं रघुनाथभूपविजयं नाम समस्ति काव्यमेकम् । तच्च नाम्ना निर्दिष्टं राजचूडामणिनैव स्वकृतानन्दराघवनाटकप्रस्तावनायाम् । यथा—

सूत्रधारः— मारिष, तथापि फलितमस्मदभिलषितेन, यतः किल यज्ञनारायणाध्वरिणा रघुनाथभूपविजयनाम्नि महाकाव्ये तावदेवमभिहितम्—

> प्राचां प्रबन्धान् रसयन्तु भव्या-
> नस्मद्वचोऽस्वादुतरो रसज्ञाः ।
> आस्वादयन्तो मधुराणि वस्तू-
> न्यम्लं न किं जम्बलमाद्रियन्ते ॥' इति ।

गोविन्ददीक्षितनन्दनयज्ञनारायणदीक्षितनिर्वर्तितरघुनाथविलासनाटकस्य प्रस्तावनायाञ्च तत्कृतस्य रघुनाथभूपविजयकाव्यस्य सत्ता सम्यगवबुध्यते । तत्र प्रस्तावनायाम्—

'नटी— तत्रभवता रघुनाथभूभुजा शिक्षित इत्यनेनैव तावदस्यापि कवयिता यज्ञनारायणयायजूक इति जानामि । यो वा रघुनाथभूपविजयसाहित्यरत्नाकरयोः काव्ययोः कर्ता, ' स एव खलु साहित्यरत्नाकरनाम्नि तत्कृतौ शिक्षां बहुमतिं चैवमुपश्लोकितवान्' इति ।

विद्यते रघुनाथभूपस्य जायास्वन्यतमया रामभद्राम्बानाम्न्या

कवाम्रेडितबुध्या विरचितं द्वादशसर्गपरिमितमितरदपि रघुनाथाभ्युदयं नाम काव्यम् ।

साहित्यसाम्राज्यं नाम काव्यं गोविन्ददीक्षितद्वितीयनन्दनेन वेङ्कटेश्वरदीक्षितेन प्रणीतमाह राजचूडामणिदीक्षित एव तन्त्रशिखामणौ —

'अस्ति गोविन्दयज्वेन्दुनाम्नाम्बातपःफलम् ।
श्रीवेङ्कटेश्वरमखी सर्वतन्त्रस्वतन्त्रधीः ॥
येनेष्टं साग्निचित्याप्तवाजपेयादिभिर्मखैः ।
कृतं साहित्यसाम्राज्यनाम काव्यमनुत्तमम् ॥
व्यतानि शुल्बमीमांसा तथा कर्मान्तवार्तिकम् ।
टुप्टीकायाः कृता टीका वार्तिकाभरणाभिधा ॥
प्रतिष्ठापितयोळक्ष्माजानेस्तस्य नियोगतः ।
चूडामणिर्वितनुते यज्वा तन्त्रशिखामणिम् ॥
गोविन्ददीक्षितचिरंतनभाग्यराशेः
श्रीवेङ्कटेश्वरमखीशितुराज्ञया मे ।
तन्त्रार्णवं तरितुमाहितसाहसस्य
सांयात्रिकी भवतु तत्करुणाकटाक्षः ॥
श्रीवेङ्कटेश्वरमखिप्रणीतं प्रविविक्षुभिः ।
वार्तिकाभरणाम्भोधिं नौरियं क्रियतां कृतिः ॥
धीमन्नाम्न्ये ( १५५९ ) शकस्याब्दे हायने षेधराभिधे ।
चूडामणिः कलयते यज्वा तन्त्रशिखामणिम् ॥'

इति श्रीमदद्वैतविद्याचार्यसर्वतन्त्रस्वतन्त्रसाग्निचित्याप्तवा-

जपेययाजिश्रीवेङ्कटेश्वरदीक्षितनियोगानुभवसमुन्मिषितमनीषाविशेषस्य विश्वजिद्याजिनः श्रीराजचूडामणिदीक्षितस्य कृतिषु तन्त्रशिखामणौ नवमस्याध्यायस्य चतुर्थः पादः । समाप्तश्चाध्यायः ।

अस्मदवलोकितग्रन्थावसाने —

'धीमन्मान्ये (१५५९) शाकस्याब्दे हायने चेश्वराभिधे ।
श्रावणे मासि नवमः पूर्णस्तन्त्रशिखामणौ ॥' इति ।

नायकवंशीयतञ्जापुराधीशो रघुनाथभूपः १६१४ तमे क्रिस्ताब्दे पित्रा दत्तं राज्यं प्रत्यपद्यत । कति हायनान्राज्यमकरोदित्यपरिस्फुटम् । तस्य राज्यसमये कविरयं प्राबध्नात्कमलिनीकलहंसनाटिकामानन्दराघवनाटकं चेति प्रबन्धद्वयम् । आनन्दराघवनाटके गोविन्ददीक्षितस्य प्रथमतनूजस्तत्कर्तृकं रघुनाथभूपविजयकाव्यं च सबहुमानं कविना निर्दिश्येते । तन्त्रशिखामणौ गोविन्ददीक्षितस्य द्वितीयनन्दनो वार्तिकाभरणादिग्रन्थानां प्रणेता तदीयाः प्रबन्धाश्च प्रशस्यन्ते । अतस्तन्त्रशिखामणिनिर्माणकाले रघुनाथभूपस्य यज्ञनारायणदीक्षितस्य चासद्भाव ऊह्यते । तन्त्रशिखामणिनिष्पत्तिकालः १६३६ तमः क्रिस्ताब्द इति निर्विवादम् । अतः कवेरस्य जीवनकालो बहुशः सप्तदशशताब्द्याः पूर्वार्ध इति वक्तुं पार्यते । अत्र कृते विमर्शे यत्किंचिदपि स्खलनमार्याः संशोध्य समीकुर्युरिति सविनयमभ्यर्थये ॥

टि. एस्. कुप्पुस्वामिशास्त्री ।

॥ श्रीः ॥

# ॥ कमलिनीकलहंसम् ॥

---

यस्योपवीतगुण एव फणावृतैक-
वक्षोरुहः कुचपटीयति वामभागे ।
तस्मै ममास्तु तमसामवसानसीम्ने
चन्द्रार्धचारुशिरसे महसे नमस्या ॥ १ ॥

(नान्द्यन्ते)

**सूत्रधारः—**

तुङ्गोत्तमाङ्गकृतमङ्गतरङ्गिणीकं
दुर्गोचितं कमपि यो वशयन्गिरीशम् ।
राजानमन्यमसमक्षमपस्य शिरस्यतानी-
द्धन्वी स विन्दतु जयश्रियमिक्षुधन्वा ॥ २ ॥

(इति पुष्पाञ्जलिं विकीर्य समन्तादवलोक्य सानन्दम्)

असमशरशरासकेलिकारै-
रुचिरपचेलिमकाकिनीनिकारैः ।
सरसिजकुशलाङ्कुरप्रकारैः
समजनि शारदवासराधिकारैः ॥ ३ ॥

संप्रति हि,

उदयमुपगतोऽयमब्जबन्धुः
सरसि निमग्नतनुं समुद्धरेन्माम् ।

इति किल बहिरीयदुच्छ्रितोऽभू-
त्प्रथमपलाशमिषात्करो नलिन्याः ॥ ४ ॥

किं च,

कलमकणिशचारुचञ्चुकोटिं
पथि पथि कीरपरम्परां विशङ्के ।
श्रवणमधुरशालिपालिगीति-
स्वरविजितांकितया तृणं चरन्तीम् ॥ ५ ॥

अपि च,

सुखविहितमुरारिबोधमुद्रा
विलसदगस्त्यमहा विकासिबाणः ।
विलसति भुवि शारदावतारो-
ऽपिहितमयूरविजृम्भणो विचित्रम् ॥ ६ ॥

(पुरतश्चक्षुषी विनिपत्य सहर्षोन्मेषम्) अहो बहोः कालादुन्मिषितानि शैलूषपरिषदभिलषितानि ! यदिदानीं विनतविबुधसम्राजो विराजो हृदयपुण्डरीकाकारे पुण्डरीकपुरे मंगलकृतसंनिधानमनन्यसामान्यानुभावतया स्वात्मानमेव गोविन्दराजवपुषा सभिकमभिकल्प्य प्रकाशितेन ताण्डवाडम्बरेणानन्दपरवशतया निद्राणमिव समाकलयन्तमुपनिषदेकसमधिगम्याकारमपि सकललोकानुजिघृक्षया चार्मणलोचनगोचरीभावमुपयिवांसं महीयांसं पुमांसमभिवन्दितुमागतमच्युतनरपालसुकृतपरिपाकरघुनाथजनाधिनाथभुजपरिपालित-चोलमण्डलमण्डनायमानया निखिलकलाकलापकनकनिकषदृषदा

परिषदा । तदद्य किमप्यभिरूपं रूपकमभिनीय विनोदनीया विस्मयनीयमनीषोन्मेषा परिषदेषा ।

( नेपथ्याभिमुखमवलोक्य संज्ञापयति । )

( प्रविश्य )

**पारिपार्श्विकः**— भाव, किमिति चिन्तातरङ्गितान्तरङ्ग इव दृश्यसे ?

**सूत्रधारः**— मारिष, इदानीमशेषभुवनप्रथमानसकलकविताविलासानां सभास्तारणां पुरस्तादनुरूपं किमपि रूपकमभिनिनीषामहे । तत्किं तादृशमिति चिन्तयति मदन्तरात्मा ।

**पारिपार्श्विकः**— भाव, किं तया चिन्तया ? सन्त्येव खलु साहित्यसौहित्यपरिणतमतयः कालिदासप्रभृतयः कवयः ।

**सूत्रधारः**— सन्त्येव प्रतिदिनप्रबन्धनिर्मातारः पुरातनकविविधातारः । तेषां पुनरास्य प्रबन्धाः प्रायेण दृष्टपूर्वा भवन्त्यमीभिः । तदभिनवं तादृशं रूपकमभिनेतव्यमस्माभिः ।

**पारिपार्श्विकः**— किमत्रापि चिन्तया ? ज्ञायते खलु दुर्नि-र्यानिदिवाप्रदीपविरुदस्य विश्वामित्रवंशमुक्तामणेरद्वैतविद्याचार्यस्य सर्वतन्त्रस्वतन्त्रस्य श्रीकृष्णभट्टपौत्रस्य लक्ष्मीभवस्वामिभट्टसुकृतपरिपाकस्य मार्गिचित्सर्वविद्याविदाग्रयाजिनः सत्यमङ्गलरत्नखेट-श्रीनिवासदीक्षितस्य तनयः कामाक्षीगर्भसंभवः श्रीमदर्धनारीश्वर-दीक्षितगुरुचरणसहजतालब्धविद्यावैशद्यः श्रीराजचूडामणिर्नाम विद्वत्कविराजचूडामणिः ।

**सूत्रधारः—**

ध्वन्यध्वन्यधिकं चमत्कृतिकृतो यस्याद्भुताः सूक्तयः
सारस्येन सुधां मुधां विदधते तां शर्करां शर्कराम् ।
सावित्र्याः प्रथमं यमुज्ज्वलगुणं वव्रे स्वयं भारती
षड्भाषाचतुरः स एष भुवने न ज्ञायते केन वा ॥

**पारिपार्श्विकः—** तेन हि गर्भसप्तम एव हायने विरचय्य सन्तुमानमस्माकं हस्ते दत्ता किल कमलिनीकलहंसनामधेया शृङ्गाररसमणिपेटिका नाटिका ।

**सूत्रधारः—** मारिष, सम्यगनुस्मारितोऽस्मि । तथावत्परिषदं विज्ञापयामि । (सप्रश्रयमञ्जलिं बद्ध्वा)

भवतामवलोकनतः प्रयोगविद्यासु परममभ्यासम् ।
सफलयितास्मि भक्तानिः प्रणायिवचांल्लालनं हि सताम् ॥

(कर्णं दत्वा) किं ब्रूथ— प्रार्थका वयं प्राथनीया जाता इति ?

**पारिपार्श्विकः—** भाव, परे गिरामस्माकं भाग्यमहिमा; यदिदानीं मिलितमेव निखिलैरपि गुणगणैः । पश्य,

कालोऽयं जलभृद्विनोलविगमात्कान्तेन्दुशोभाङ्कुरः
शैलूषागमवावदूकचरणः शंभुः सभानायकः ।
सारस्यैकनिधिः सभा वयममी नाट्ये धुरीणाः कवेर्वाणी तस्य दरीधरीति च सुधालज्जाकरीं माधुरीम् ॥

**सूत्रधारः—** मारिष, तदुक्तवतां भक्तमेव शरत्समयमधिकृत्य संगीतकमङ्गीक्रियतामिति संगीतचन्द्रिका ।

(नेपथ्ये)

एण्हिं किल कलहंसो सारसिआए पुरो सकन्ताए ।
वरिसच्चअरमणिज्जं चुम्बइ राएण कमलिणीकुसुमं ॥

[ इदानीं किल कलहंसः सारसिकायाः पुरः स्वकान्तायाः ।
वर्षात्ययरमणीयं चुम्बति रागेण कमलिनीकुसुमम् ॥ ]

**सूत्रधारः**— अहो सम्यगुपगीतमस्मदभिप्रायज्ञया संगीतचन्द्रिकया । प्रकृतार्थानुबन्धिनी गाथा ।

**पारिपार्श्विकः**— भाव, महाराजकलहंसनर्मसाचिव्यभूमिकाधारी रत्नशेखरः काञ्चुकेयवेषान्तरितो नटराजश्चैन एवाभिवर्तते । तदावामप्यनन्तरकरणीयाय सज्जीभवावः ।

[इति निष्क्रान्तौ ।

**इति प्रस्तावना ।**

(ततः प्रविशति विदूषकः काञ्चुकेयश्च ।)

**विदूषकः**— अए कञ्चुकेअ, कहिं पत्थिदोसि ?
[अये काञ्चुकेय, कुत्र प्रस्थितोऽसि ?]

**काञ्चुकेयः**— आर्य चक्रवाक, महाराजकलहंसनिदेशेन भवन्तमेवाकारयितुम् ।

**विदूषकः**— अए, किं कुणइ दाणिं पिअवयस्सो ?
[अये, किं करोतीदानीं प्रियवयस्यः ?]

**काञ्चुकेयः**— आर्य, संप्रत्येव मातुलं महाराजकमलाकरं परिभूय तदीयदुहितरं कमलिनीं धात्र्या सहापहरन्बकोटहतको व्यो-

प्रयाणेन गत इति वार्ताहरमुखादाकर्ण्य अत्यानुशयस्तस्मिन्महाया-न्तपालस्य स्वात्मसारस्य सविधं समरकसानुप्रेष्य विविक्तदेशा-भिलाषी मन्मथोद्यानपरिसरे मुक्तामण्डपमेक एवाधिवसति ।

**विदूषकः**— किं दाणिं पजापालणसमए विवित्तदेसाहिला-सो जादो पिअवअस्सस्स ?

[किमिदानीं प्रजापालनसमये विविक्तदेशाभिलाषो जातः प्रियवयस्यस्य ?]

**काञ्चुकीयः**— आर्य श्रूयतां रहस्यम्— पूर्वेद्युः किल निशायां देशान्तरादागच्छता कारण्डवेन समानीतमिति तत्प्रणयिनी का-रण्डविका किमप्यद्भुतं पुण्डरीकमुकुलं देव्यै मानसिकायै प्राभृती-कृतवती ।

**विदूषकः**— तदो तदो ।

[ततस्ततः ।]

**काञ्चुकीयः**— ततश्च तन्मुकुलं कौतूहलात्कथंचन विकासय-न्तीषु देवीपरिचारिकासु साक्षादरविन्दमन्दिरेन्दिरा काचन कु-मारिका सख्या सह समदृश्यत । ततश्च तां दृष्ट्वा देवी विस्मय-स्तिमितलोचना पुनःपुनः सानुनयं कुलनामनी तयोरनुयुञ्जाना यावच्च ताभ्यां कन्यकाभ्यां कथंचिदपि कुलनामनी प्रकाशिते, तावत्कमलजेति कुमारिकायाः मृणालिकेति सख्याश्च नाम विधाय नाट्यविचाररसिकतया भरताचार्यहस्ते नाट्यशिक्षायै समर्पित-वती । तस्यां च कमलजायामासक्तचित्तो महाराज इत्यन्तःपुरे किंवदन्ती ।

**विदूषकः**— अम्हो अवरद्धं मए पिअवअस्सस्स, जं आहूदो गच्छम्मि ।

[अहो अपराद्धं मया प्रियवयस्यस्य, यदाहूतो गच्छामि । ]

**काञ्चुकेयः**— किमिदानीं विलम्बकारणमार्यस्य ?

**विदूषकः**— तेणज्जेव बालमित्तेण कारण्डवेण देसन्तरे दिट्ठं किं वि कण्णआरअणं चित्तफलए लिहिअं विलोअन्तेण मए अच्चरिअदिथमिदमाणसदाए कालादिवादो ण मुणिओ ।

[तेनैव बालमित्रेण कारण्डवेन देशान्तरे दृष्टं किमपि कन्यकारत्नं चित्रफलके लिखितं विलोकयता मया आश्चर्यस्तिमितमानसतया कालातिपातो न ज्ञातः । ]

**काञ्चुकेयः**— किं चित्रविद्याप्यभ्यस्ता कारण्डवेन ?

**विदूषकः**— ण णवरिअ चित्तविज्जा, इन्दआलविज्जा वि ।

[न केवलं चित्रविद्या, इन्द्रजालविद्यापि । ]

**काञ्चुकेयः**— नरिकं चित्रफलकं गृहीतं महाराजाय दर्शयितुम् ?

**विदूषकः**— अह इं ।

[अथ किम । ]

**काञ्चुकेयः**— (ऊर्ध्वमवलोक्य) अहो गगनमध्यमध्यास्ते भगवान्गभस्तिमाली ! संप्रति हि,

सवितृकिरणपातः शक्यते नैव सोढुं
शिशिरसलिलसिक्तं श्रीगृहं मां नयध्वम् ।

इति पथिकजनानामेयुषां पादमूलं
शरणमिव भजन्त्या संश्रितं छाययाभूत् ॥ १० ॥

तदावामपि महाराजकलहंसपादमूलमेव गच्छावः ।

[ इति निष्क्रान्तौ ।

इति मिश्रविष्कम्भकः ॥

( ततः प्रविशति कामयमानावस्थो राजा । )

**राजा—**

तद्वक्त्रं शरदिन्दुमण्डलनिभं तं च प्रवालप्रभं
बिम्बोष्ठं तदुदारनीरजदलश्रीमोचनं लोचनम् ।
तल्लीलातरलं भ्रुवोश्च युगलं तन्मेचकं कैशिकं
तत्तारुण्यतरङ्गितं वपुरपि स्वान्तं न मे मुञ्चति ॥ ११ ॥

(मदनबाधां रूपयित्वा) हन्त किमत्र करणीयम् ! अतनीयसी हि कुसुमबाणबाधा । (आकाशे लक्ष्यं बद्ध्वा) भो भोः पञ्चशर पातकिन्,

द्वयोः समाना सुमनोवरेषुता
तथा सुपर्वाश्रयधन्वधारिता ।
तथापि दग्धोऽसि दृशा हरेण य-
त्तदेतदस्माद्विधबाधजं फलम् ॥ १२ ॥

(सचमत्कारम् )

बिम्बोपमश्रीकाशिलीमुखो भवा-
न्बिभर्ति नूनं विषमायुधाभिधाम् ।

न पञ्चबाणीभरणाद्यदेकदा
पतन्ति हा हन्त परःशताः शराः ॥

अथ वा क्व पुनरिदानीं पुरातनः पञ्चशरः पुष्पबाणः ? दग्ध एव हि स भगवता पुरविरोधिना । किं त्विदानीम्——

नेत्राग्नौ पुरमाथिना हुतदशां नीते सुमास्त्रे पुरा
पश्चेषौ पुनरात्ममौलिहरणक्रुद्धः सरोजासनः ।
अन्यं तस्य विभोः सपत्नमतनुं सृष्ट्वा पुनस्तस्य च
प्रायो वज्रमतन्तनीदिषुतया तूणीरमप्यक्षयम् ॥

(सस्मरणम्) हन्त किमित्यद्यापि चिरयति प्रियवयस्यः !

(ततः प्रविशति विदूषकः ।)

**विदूषकः**— अज्ज खु समाआरिदोम्हि कञ्चुइअमुहादो पिअवअस्सेण । ता मुत्तामण्डवं एव्व गमिस्सम् ।

[अद्य खलु समाकारितोऽस्मि काञ्चुकेयमुखात्प्रियवयस्येन । तन्मुक्तामण्डपमेव गमिष्यामि ।] (इति परिक्रामति ।)

(नातिदूरे पुरोऽवलोक्य)

को णु उण एसो कसिणपक्खचउद्दसीसुहाकिरणो विअ सोन्देरमेत्तावसिट्ठतणुजट्ठी मुत्तो विअ विरहो चिट्ठइ । (निरूप्य) अहो पिअवअस्सो एव्व ! (उपसृत्य) जेदु पिअवअस्सो चिन्तिअकज्जसिद्धीए ।

[को नु पुनरेष कृष्णपक्षचतुर्दशीसुधाकिरण इव सौन्दर्यमात्रावशिष्टतनुयष्टिर्मूर्त इव विरहस्तिष्ठति । अहो प्रियवयस्य एव ! जयतु प्रियवयस्यश्चिन्तितकार्यसिद्ध्या ।]

**राजा**— (स्वगतम्) अवितथफलमस्तु ब्राह्मणवचनम् । (प्रकाशम्) सखे, उपविश्यताम् ।

**विदूषकः**— (उपविश्य, स्वगतम्) अहो अण्णारिसो से मअणसंदावो । तह हि—

गण्डो पाणिसरोजणिक्खणिहिओ बाहाउला लोअणा
वत्तं पव्वणिसावसाणरअणीणाहप्पिअंभावुअं ।
गत्तं भाणमिणालखण्डसुसमं सासा पमाणाहिआ
सुण्णं हन्त मणं किमेत्थ बहुणा सोन्देरसेसो सहा ॥

(प्रकाशम्) वअस्स, किं चिंताउलो विअ पुलोइज्जासि ।

[अहो अन्यादृशोऽस्य मदनसंतापः ।

तथा हि—

गण्डः पाणिसरोजनिक्षनिहितो बाष्पाकुले लोचने
वक्त्रं पर्वनिशावसानरजनीनाथप्रियंभावुकम् ।
गात्रं म्लानमृणालखण्डसुषमं श्वासाः प्रमाणाधिकाः
शून्यं हन्त मनः किमत्र बहुना सौन्दर्यशेषः सखा ॥

वयस्य, किं चिन्ताकुल इव दृश्यसे ?]

**राजा**— सखे, किमिव ?

**विदूषकः**— वअस्स, किं दे चिन्ताणिदाणं दाणिं मह वि गोवणिज्जम् ?

[वयस्य किं ते चिन्तानिदानमिदानीं ममापि गोपनीयम् ?]

**राजा**— सखे, किमात्मनोऽपि गोपनीयमस्ति ? उपन्यस्यते ; श्रूयताम् ।

**विदूषकः**— ओहिदोम्हि ।
[अवहितोऽस्मि ।]

**राजा**— सखे, पूर्वेद्युः किल विभावर्यां कार्यासनादुत्थाय निद्रासुख-मनुभवन्नहमपि हृदयासेचनकं स्वप्नमुपलब्धवानस्मि ।

**विदूषकः**— कहं विअ ?
[कथमिव ?]

**राजा**—

आस्थानमण्डपगतानखिलान्नृपाला-
न्सस्थाप्य तत्तदुचितैरुपचारभेदैः ।
उद्यानभूमिमुपगम्य सखे स्थितोऽस्मि
गुञ्जन्मधुव्रतकुले कुहचिन्निकुञ्जे ॥

**विदूषकः**— तदो तदो ।
[ततस्ततः ।]

**राजा**—

विश्वत्रयीविजयसादरमारवीर-
मौर्वीलतामधुरटङ्कृतिमोहदायि ।
मञ्जीरशिञ्जितमहो मम कर्णसीम्नो-
रायुष्यनादिमधिकामथ पुष्यति स्म ॥

अनन्तरं च,

कुतुकादहं बहिरुपेत्य कुञ्जतः
कुलभञ्जतुङ्गकुचभारमन्थराम् ।

सुकृतैरवैक्षिषि सुगन्धिधन्वनः
कुलदेवतामिव कुरङ्गलोचनाम् ॥

(सानुध्यानम्) सखे, तस्याः किल तरललोचनायाः,

सौभाग्यं पदपद्मयोर्यदि जहत्संपल्लवाः पल्लवाः
काठिन्यं कुचकुम्भयोर्यदि कथंकारं स्तुमो भूभृतः ।
वक्त्रं चेत्कमलस्मृतावपि मनो वैलक्ष्यमालम्बते
कान्तिश्चेत्तडितां कियत्र बहुना का वा कथा वर्णने ॥

किं च,

न्यक्कारो नयनश्रिया जलरुहां न्यायागतं वैभवं
भङ्गो भ्रूलतयेरपाङ्गवलनैर्भद्रासनाध्यासनम् ।
शिक्षा चिल्लिकया मनोजधनुषः श्रेयोभरायोजनं
पूर्णेन्दोर्वदनेन्दुना परिभवः पुण्योपनीतं फलम् ॥

अपि च,

कोशागारसमृद्धिरुत्पलरुचां कोपाद्गृहीता दृशा
साम्राज्यस्थितिरिक्षुजन्मधनुषः सद्योऽवधूता भ्रुवा ।
बालेन्दोरलिकान्तकेलिकलया वन्दीकृतं वैभवं
कारायां रचिता कचोच्चयरुचा धाराधराणां रुचिः ॥

इतरच्च,

केशाकेशिविलासलालसतमा केशावली वारिदै-
र्बाहूबाहविसाहसैकरसिका बाहायुगी वल्लिभिः ।
धत्ते पाणितलं तलातलिविधौ धाष्ट्र्यं सरोजश्रिया
पादापादिकुलापदानमसकृत्पादाम्बुजं पल्लवैः ॥

अन्यच्च,

पादाम्भोरुहयोः प्रवालपटली पादुद्वयीवाहिका
हस्तालम्बनदानजातकुतुकं हस्ताम्बुजस्याम्बुजम् ।
वक्त्रेन्दोर्मणिदर्पणार्पणविधौ वाञ्छां विधत्ते विधु-
र्धम्मिल्लस्य सुगन्धधूपपुटिकां दाधाति धाराधरः ॥

**विदूषकः**— तदो तदो ।
[ततस्ततः ।]

**राजा**— सखे, तदात्वे हि मम,

अन्तरङ्गममृताम्बुनिर्झरै-
र्हन्त सिक्तमिव तत्क्षणादभूत् ।
अङ्गजोऽपि दृढकृष्टशिञ्जिनी-
मातनिष्ट निजचापयष्टिकाम् ॥

**विदूषकः**— ओसरण्णेसी खु पञ्चसरपाअई ।
[अवसरान्वेषी खलु पञ्चशरपातकी ।]

**राजा**— ततश्च,

आवर्ज्य चाटुभिरिमां पुलकैः स्फुरद्भि-
रन्तःप्ररूढमनुरागमिवोद्गिरन्तीम् ।
शय्यां कथंचिदनयं शनकैः कृशाङ्गीं
हंसीं विलासकुपितामिव राजहंसः ॥

ततश्च,

आश्रितापि शयनं कथंचन
व्रीडया विवलिताननाजनि ।

संमुखस्थितिमपीक्षिता मया
साहसं परममन्यताबला ॥

ततश्च,

निद्रया किल निमीलितेक्षणा
लज्जयाथ ललनाशिखामणिः ।
चुम्बिता चिरतरं कपोलयो-
रुन्मिषत्सु पुलकेष्वखिद्यत ॥

ततश्च,

कञ्चुकापनयनोन्मुखे मयि
स्वस्तिकं सुतनुरादधे दृढम् ।
सा तथापि बहिरेव सस्वजे
वञ्चितोरुकुचमर्दनं मया ॥

ततश्च,

रत्नदीपवितथासु फूत्क्रिया-
स्वङ्गना दृशममीलयत्स्वयम् ।
अंशुकं हरति मामके करे
सस्वजे तदवलोकनह्रिया ॥

अनन्तरं च,

किंचिदङ्कुरितहासमग्रुष्या
मुञ्च मुञ्च दयितेति वदन्त्याः ।
उन्नमय्य वदनं मयि रागा-
त्पातुमिच्छति सखेऽधरबिम्बम् ॥

विविधैश्चाटुपाठैर्मां विपाठैरिव दुःसहैः ।
हन्त प्रबोधयामासुर्मागधा मन्दमेधसः ॥

ततश्च वैभातिकं निखिलमपि नियमजातं निर्वर्त्य संगीतशालासविधमगमम् ।

तत्र च,

अर्धोरुकापिहितचारुनितम्बबिम्बा
　स्नेहावसेकसरसीकृतसंधिबन्धा ।
भव्येन्द्रगोपपटबद्धपयोधरा सा
　स्नानागता सहसखी सुमुखी समागात् ॥

ततश्च तस्यास्तामरसलोचनायाः,

पूर्वं केलिसखीजनेन किमपि भ्रूसंज्ञया सूचिते
　दूरादद्भुतवस्तुदर्शनरसादृष्टिः पतन्ती मयि ।
भयः प्रेमतरङ्गिता प्रणयिनी संरूढरागा क्षणा-
　दाश्चर्यस्तिमितान्तरा निववृते हन्त प्रपाकर्बुरा ॥

तत्क्षणं च,

अङ्कुशूरकुलापाङ्गमणिशृङ्खलया खलः ।
बबन्ध सुदृढं हन्त मन्मनोगन्धसिन्धुरम् ॥

वयस्य, तस्याश्च तदात्वे,

अभूत निभृतोल्लासो हासोऽधरे परमागता-
　मपि च कुचयोः श्वासो वासो व्यधत्त परिश्लथम् ।
अजनि च दृशोस्तुङ्गा शृङ्गारभङ्गिरभङ्गुरा
　किमपरमभूद्भ्रूविल्लीवल्ली तरङ्गितविभ्रमा ॥

**विदूषकः**— ता भण्णे, फलिदं पिअवअस्समणोरहेणेत्ति; जं ताए वि हिअअं विसमसरभुअदण्डसोण्डीरपरिचुम्बिअं ।

[तन्मन्ये फलितं प्रियवयस्यमनोरथेनेति; यत्तस्या अपि हृदयं विषमशरभुजदण्डशौण्डीर्यपरिचुम्बितम् ।]

**राजा**— वयस्य, तदारंभे किल चतुरतरं कृतं चकोराक्ष्या;

यतः—

आलीजनेन सह संहितमन्दहास-
मालापकैतवसुधारसमुद्गिरन्ती ।
व्याजेन मां प्रति कराम्बुजयोरधत्त
सायंतनाम्बुरुहकोरकसामरस्यम् ॥

ततश्च,

अन्वायान्तीमनुपदमसावालिमावृत्तकण्ठं
पश्यन्तीव प्रणयमधुरं प्रापयन्ती दृशं माम् ।
लीलालोलैरलसवलितैर्लीनरागैरपाङ्गै-
र्हृत्वा धैर्यं मम गतवती हन्त संगीतशालाम् ॥

तदाप्रभृति मम,

आराद्गतेव सविधं समुपागतेव
चित्रार्पितेव मुकुरे प्रतिबिम्बितेव ।
अग्रे स्थितेव हृदयान्तरवस्थितेव
सा मे परिस्फुरति संततमम्बुजाक्षी ॥

**विदूषकः**— (स्वगतम्) अह्मो दिढअरणिरूढो से अणुराअबन्धो। कहं उण एसो विणोअणिज्जो ? (विचिन्त्य) होदु एव्वम् । (प्रकाशम्) वअस्स, भवन्तलोअणभाअहेअं तं रूवहेअं एदस्स सोन्दरस्स किं अणुकरिस्सदित्ति मह महन्तो खु संदेहो । तं भवन्तो एव्व एदं मम्मं णिरूविअ अवणअदु ।

[अहो दृढतरनिरूढोऽस्यानुरागबन्धः ! कथं पुनरेष विनोदनीयः ? भवत्वेवम् । वयस्य, भवल्लोचनभागधेयं तद्रूपधेयमेतस्य सौन्दर्यस्य किमनुकरिष्यतीति मम महान्खलु संदेहः । तं भवानेवैतन्मर्म निरूप्यापनयतु ।]

[इत्युत्तरीयाञ्चलोपहितं चित्रफलकमादाय समर्पयति ।

**राजा**— (आदाय विस्मयस्तिमितलोचनं चिरं निर्वर्ण्य, सविभ्रमौत्सुक्यम्) हन्त ! वृथैव मया सर्वं खेदोऽनुभूयते । इयमिहैवास्मन्नयनचकोरचन्द्रिका । (निर्वर्ण्य)

दृष्टा संततमालिरिन्दुकलया दूरेऽपि नो यामिनी
वल्ली कोमलपल्लवा विजयते वाचापि न क्ष्मारुहाम् ।
शालूरः पुलिनेन भाति नटिनी तावन्न संलक्ष्यते
तन्मन्ये मदनेन्द्रजालिककृतं मायासमुज्जृम्भणम् ॥३९॥

(नटनमालोक्य सयुक्तिकम्)

अमृतकिरणबिम्बान्यम्बुजानां कदम्बा-
न्यनुकलमपि सृष्ट्वा हस्तशिक्षाविधायै ।
सरसिजजनिरिद्धा संततान्निद्रशोभं
वदनकमलमस्या वारिजाक्ष्या व्यतानीत् ॥ ४० ॥

इतरच,

श्रोणीबिम्बः सरलपुलिनश्रेणिसब्रह्मचारी
वक्षोजाभ्यामपि च सरणिर्व्यज्यते कोकयूनोः ।
शीतज्योतिर्वदनकमलश्रीसहायो मृगाक्ष्या
बाढं गाढं नयनरुचिभिर्बद्धसख्यं सरोजम् ॥४१॥

(विमृश्य) सखे, सर्वमिदमनुपपन्नमेव समुपवर्णितमस्माभिः ।
तथा हि—

श्रोणीसाम्यमुपैतु सैकतभरः क्षीयेन्समीरैः कथं
वार्त्ता का कुचमण्डलानुकरणे विश्लेषिणोः कोकयोः ।
साहाय्यं वदनश्रियो वितनुतां चन्द्रः कलङ्की कथं
सायं संकुचदब्जमक्षिरुचिभिः सख्यं विधत्तां कथम् ॥४२॥

तदिदानीमेनामनुनयामि ।

अयि सुन्दरि मामनङ्गबाण-
प्रसभापातचिरप्ररूढतापम् ।
अवलोकसुधारसाभिषेकैः
सकृदानन्दय संदितोऽञ्जलिस्ते ॥ ४३ ॥

[इति पादयोः पतितुमिच्छति ।

**विदूषकः**— (स्वगतम्) हन्त चित्तफलअगअं पिअदमं पच्चक्खं मण्णेदि पिअवअस्सो ! (प्रकाशम्) वअस्स, किं एदं अकण्डतण्ड-विअं ! चित्तफलअं किल एदं ।

[हन्त चित्रफलकगतां प्रियतमां प्रत्यक्षां मन्यते प्रिय-

वयस्य ! वयस्य, किमेतदकाण्डताण्डवितम् ? चित्रफलकं किलैतत् ।]

**राजा—** (सविषादाश्चर्यम्) अहो चित्रकारककौशलम् !

निर्वर्णयन्नपि निमेषपराङ्मुखेण
नेत्रेण चित्रफलके लिखितां नताङ्गीम् ।
संबोधितोऽपि भवता यदवैमि सोऽहं
साक्षादिवाक्षिसरणौ परिवर्तमानाम् ॥ ४४ ॥

सखे, निवेदय केन कृतिनेयमालिखिता दयिता ।

**विदूषकः—** वअस्स, कारण्डवेण विलिहिअ भवन्तस्स पाहुडीकरणिज्जेत्ति मह हत्थे दिण्णा इमिआ कण्णा ।

[वयस्य, कारण्डवेन विलिख्य भवते प्राभृतीकरणीयेति मम हस्ते दत्तेयं कन्या ।]

**राजा—** क्व पुनरियं कारण्डवेन दृष्टा ?

**विदूषकः—** वअस्स, माणसपुरादो आअच्छन्तेण तेण अच्छोदसरम्मि कर्स्सि वि पुण्डरीए सह सहीए णिवसन्ती एसा दिट्ठा ।

[वयस्य, मानसपुरादागच्छता तेनाच्छोदसरसि कस्मिन्नपि पुण्डरीके सह सख्या निवसन्त्येषा दृष्टा ।]

**राजा—** सखे, कथमियं देवीमनुप्राप्ता ?

**विदूषकः—** सो किल कारण्डवो सार्अंसमअसंकुइदं तं

कण्णआरअणगब्भं पुण्डरीअं आणीअ कारण्डविआमुहेण देवीए पाहुडीकिअवन्तो ।

[स किल कारण्डवः सायंसमयसंकुचितं तत्कन्यकारत्नगर्भं पुण्डरीकमानीय कारण्डविकामुखेन देव्यै प्राभृतीकृतवान् ।]

**राजा**— कथमियं मानुषजनसंचरणाक्षममच्छोदसरस्तीरमधिगम्य पुण्डरीकमध्यमध्यास्त तन्विमध्या ?

**विदूषकः**— एसा किळ कण्णआ पुणो पुणो देवीए साणुणअं इमं एव्व अत्थं अणुउज्जमाणा वि ण पडिवज्जइ पडिउत्तरम् ।

[एषा किल कन्यका पुनः पुनर्देव्या सानुनयमिममेवार्थमनुयुज्यमानापि न प्रतिपद्यते प्रत्युत्तरम् ।]

[राजा पुनश्च साश्चर्यं चित्रफलकमालोकयन् किमपि विलिख्य विदूषकहस्ते प्रयच्छति ।

**विदूषकः**— (गृहीत्वा मनसि वाचयित्वा) अहो झत्ति एव्व णिरवज्जसरसपज्जणिम्माणणिउणो वअस्सो !

[अहो झटित्येव निरवद्यसरसपद्यनिर्माणनिपुणो वयस्यः !]

[इति श्लाघमानः किमपि विलिख्य राज्ञे दर्शयति ।

**राजा**— (विलोक्य सश्लाघम्) साधु सखे साधु । अस्मदभिलषितानुगुणमेव भवता विलिखितम् ।

यतः,

प्रणयापराधशमनाय सुभ्रुव-
श्चरणारविन्दमरुणाम्बुजप्रभम्

मम मानसं मकुटभूमणीगणे-
रसिताम्बुजद्युति विधातुमीहते ॥ ४५ ॥

**विदूषकः**— किं दाणिं एव्व मुणिज्जइ मह परेङ्गिअविण्णाणणेउणी वअस्सेण ?

[किमिदानीमेव ज्ञायते मम पराङ्गितविज्ञाननैपुणी वयस्येन ?]

**राजा**— सखे, यथेदं देवी न जानाति, तथा संरक्ष्य समये मदिरानन्दनाय देयम् । [इति विदूषकस्य हस्ते चित्रफलकमर्पयति ।

(ततः प्रविशति देवी मृणालिका च ।)

**देवी**— मिणालिए, किं तुह पिअसही कमलआ तेसु तेसु णट्टणकलारहस्सोवदेसग्गहणेसु भरआआरिअं ण किलेसअदि ?

[मृणालिके, किं तव प्रियसखी कमलजा तेषु तेषु नटनकलारहस्योपदेशग्रहणेषु भरताचार्यं न क्लेशयति ?]

**मृणालिका**— देवि, ताए णट्टणोवदेसग्गहणकोसल्लेसकहणं वि अदिट्ठतण्णट्टणणेउणीआणं अच्चुत्ती विअ पडिभाइ । ता अज्ज एव्व रत्तीए पच्चक्खीकरिज्जदु भवदी ताए णट्टणकोसल्लम् ।

[देवि, तस्या नटनोपदेशग्रहणकौशललेशकथनमप्यदृष्टतन्नटननैपुणीकानामत्युक्तिरिव प्रतिभाति । तदद्यैव रात्रौ प्रत्यक्षीकरोतु भवती तस्या नटनकौशलम् ।]

**देवी**— अये, बओहहदअदुग्गीहिदं सुणिअ अज्ज पज्जाउलं मह हिअअम् । ता तस्सिं णिसाईए ताए णट्टणकोसल्लं अज्जउत्तेण

सह एव्व पेक्खिस्सं । दाणिं उण अज्जउत्तं एव्व बओडहदअ-समुस्सादणस्स उस्साहइदुं गच्छम्हो ।

[अये बकोटहतकदुरीहितं श्रुत्वाग पर्याकुलं मे हृदयम् । तत्तस्मिन्निगृहीते तस्मा नटनकौशलमार्यपुत्रेण सहैव प्रेक्षिष्ये । इदानीं पुनरार्यपुत्रमेव बकोटहतकसमुत्सादनायोत्साहयितुं गच्छावः ।

[इत्युपसर्पतः ।

**राजा—** (देवीं दृष्ट्वा) इत इतो देवी ।

[इत्युत्थाय करे गृहीत्वा आसने निवेशयति ।

**विदूषकः—** सोत्थि भोदीए ।

[स्वस्ति भवत्यै ।]

**राजा—**अपि कुशलं देव्यै ?

**देवी—** अज्जउत्त, कुदो मे कुसलं भवन्तम्मि बओडहदअं उवे-क्खमाणे !

[आर्यपुत्र, कुतो मे कुशलं भवति बकोटहतकमुपेक्षमाणे ?]

**राजा—** देवि, तव कनिष्ठमातुः कमलालयायाः भर्त्रे मम च मातुलाय कमलाकराय द्रुह्यत्यपि बकोटे कथं ममोपेक्षासंभावना भवत्याः ! पूर्वमेव तदुत्सादनार्थं त्वत्सहजाय सारसाय भ्रमरकहस्ते प्रेषितास्माभिः पत्रिका । तदनुपदमेव समागमिष्यति जयांशी भ्रमरकः ।

(प्रविश्य)

**दौवारिकः—** जयतु जयतु देवः । देव, ज्वालसारससकाशा-दागत्य भ्रमरको द्वारि तिष्ठति ।

**राजा**— प्रवेशयतां सत्वरं भ्रमरकः ।

**दौवारिकः**— तथा । [इति निष्क्रान्तः ।

(प्रविश्य)

**भ्रमरकः**— जेदु देवो । देव, एसा अंतपाळसाळसारसस्स विण्णावणा ।

[जयतु देवः । देव, एषा अन्तपालश्यालसारसस्य विज्ञापना । ]

[इति भूर्जपत्रं भूमौ निक्षिपति ।

**राजा**— कः कोऽत्र भोः !

(प्रविश्य लेखकः पत्रमादाय वाचयति ।)

"स्वस्ति श्रीराजाधिराजपरमेश्वराणां महाराजकलहंसानां चरणारविन्दभद्रपीठयोर्नमस्कृत्य स्वामिनामन्तपालः सारसो विज्ञापयति— स्वामिनामाज्ञापनचीटिका शिरसा धृता । स्वामिनामनुमतमेवेदमिति ततः पूर्वमेव मया चतुरतरमखिलमपि चतुरङ्गबलं सज्जीकृत्य बकोटहतकं पशुमारं मारयित्वा यथापूर्वमार्यकमलाकरः पतिष्ठापितः । कमलिनी तु सह धात्र्या कुत्र वा तेन हतकेन निहितेति न ज्ञायते । प्रतिदिशं च परःशताः प्रणिधयस्तदन्वेषणाय प्रेषिताः । ततः परं स्वामिन एव कर्तव्येषु प्रमाणम्" इति ।

**राजा**— (स्वगतम्) नूनमियमेव कमलजा कमलिनी भवेत् । (प्रकाशम्) साधु सारस साधु । लेखक, असद्वाचाभिधीयतां कोशाधिकारी पूर्णपात्रेण संभावनीयोऽयं भ्रमरक इति ।

**लेखकः**— तथा । [इति भ्रमरकेण सह निष्क्रान्तः ।

**राजा**— देवि, श्रुतं किल श्रोतव्यम् ?

**देवी**— अज्जउत्त, जाव वच्छाए कमलिणीए उत्तन्तो ण सुणि-
ज्जइ दाव ण पडिट्ठिअं होइ मे हिअअम् ।

[आर्यपुत्र, यावद्वत्सायाः कमलिन्या वृत्तान्तो न श्रूयते
तावन्न प्रतिष्ठितं भवति मे हृदयम् ।]

**राजा**— (निमित्तं सूचयित्वा) देवि, तम्याश्चानुपदमेव शुभोदर्कतां
श्रोष्यसि ।

**मृणालिका**— (स्वगतम्) किं दाणिं एव्व कहइस्सं भूदत्थम् ?
(विचार्य) ण अअं ओसरो; समए एव्व पअडीकरोमि ।

[किमिदानीमेव कथयिष्यामि भूतार्थम् ? नायमवसरः;
समय एव प्रकटीकरोमि ।]

(नेपथ्ये)

**वैतालिकः**— सुखाय भवतु सायंतनी संध्या देवस्य । सं-
प्रति हि—

आलिङ्ग्य प्रवसत्प्रियाः कमलिनीरात्मीयबिम्बच्छला-
द्व्यालक्तकविभ्रमं वितनुते भास्वान्प्रतीच्या दिशः ।
किं चोदञ्चति मुक्तभानुकिरणश्रेणीपुरःपुञ्जितं
संध्यानाटदिन्दुशेखरजटासज्जद्घनाभं तमः ॥ ४६ ॥

**राजा**— देवि, तदन्तःपुरमेव प्रविशतु भवती । आवामपि
समुपास्य संध्यामनुपदमेव तत्र गच्छावः ॥

[इति निष्क्रान्ताः सर्वे ।

इति प्रथमोऽङ्कः ॥

## द्वितीयोऽङ्कः ॥

(ततः प्रविशति सुखोत्थितो विदूषकः ।)

**विदूषकः—** *(सतन्द्रं करेण करं निष्पीडयन्दृष्टिं प्रमृज्य)* ही ही अहो मे उअरंभरित्तणम् ! जं दाणिं ताहिं ताहिं अन्तेउरवहूहिं भट्टिणो पिअवअस्सोत्ति साअरं समप्पिअं लड्डुअखण्डजालं कण्ठग्गं भक्खिअ एत्थ एव्व चउस्सालन्तरे बम्हणि वि विह्नरिअ णिद्दाए बलामोडिओम्हि । (सस्मरणं शिरोभागमवलोक्य) हद्धि हद्धि ण दीसइ मए उवधाणीकिदं तं चित्तफलअम्, जं देवीदंसणपहारो रक्खणिज्जंत्ति पिअवअस्सेण दिण्णम् । (विचिन्त्य) णूणं इदो तदो संचरन्तेण देवीपरिअणेण णिद्दापरवसं मं वंचिऊण ओहरिदं हवे । (इति सविषादं परिभ्रमन्नुत्तरीयाञ्चलमवलोक्य) हद्धि हद्धि कोवि एसो दुट्ठदव्वीकरो कुण्डलिओ मह उत्तरीअञ्चलं ओलम्बेदि । (इति सभयकम्पमुत्तरीयमधस्तात्प्रक्षिप्य) दिट्ठिआ अणेण ण दट्ठोम्हि । अज्ज पुणो वि माअराए गब्भादो णिग्गदोम्हि । णं दाव दण्डकट्ठेण पहरिस्सं । (इति तथा कृत्वा) हन्त दाणिं वि ण मुञ्चइ एसो कुण्डलणं । ता मण्णे दण्डपादेण मारिदोत्ति । (उपसृत्य) अहो मे अकण्डभीरुदा ! एसा का वि पत्तसंपुडिआ । (विमृश्य) णूणं एसा केण वि देवीपरिअणेण अकण्डभीरुअं मं परिहसिदुं एत्थ णिबद्धा । होदु, किं एत्थ अक्खराइंपि पेक्खिस्सं । (इति पत्रसंपुटिकामुन्मुच्य मनसि वाचयन्) किं एदं ! पिअवअस्सं उद्दिसिअ

कमळआए महणलेहो विअ । (विचिन्त्य) अज्ज क्खु ताए पिअसही मिणालिआ दरसिढिलणिद्देण मए एत्थ संचरन्ती विअ दिट्ठा । ताए णूणं महाराअस्स एसो दंसइस्सदित्ति एसा पत्तसंपुडिआ णिबद्धा । जुज्जइ अ एदं । जं सा कमळआ पिअवअस्सासत्तमाणसेत्ति सुणिज्जदि । (विमृश्य सहर्षम्) णूणं इमाए एव्व मिणालिआए णिअसहीविणोदणस्स तं चित्तफळअं वि ओहारिदम् । (पुरोऽवलोक्य) एसो एआई पिअवअस्सो समाअच्छइ । ता णं इमं पत्तसंपुडिअं दंसऊण किं वि उज्जीवइस्सं ।

[ ही ही अहो मे उदरंभरित्वम् ! यदिदानीं ताभिस्ताभिरन्तःपुरवधूभिः भर्तुः प्रियवयस्य इति सादरं समर्पितं लड्डुकखण्डजालं कण्ठवध्रं भक्षयित्वात्रैव चतुःशालान्तरे ब्राह्मणीमपि विस्मृत्य निद्रया बलात्कृतोऽस्मि । हा धिक् हा धिक् न दृश्यते मयोपधानीकृतं तच्चित्रफलकम्, यद्देवीदर्शनपथाद्रक्षणीयमिति प्रियवयस्येन दत्तम् । नूनमितस्ततः संचरता देवीपरिजनेन निद्रापरवशं मां वञ्चयित्वापहृतं भवेत् । हा धिक् हा धिक् कोऽप्येष दुष्टदर्वीकरः कुण्डलितो ममोत्तरीयाञ्चलमालम्बते । दिष्ट्यानेन न दष्टोऽस्मि । अद्य पुनरपि मातुर्गर्भान्निर्गतोऽस्मि । एनं तावद्दण्डकाष्ठेन प्रहरिष्यामि । हन्तेदानीमपि न मुञ्चत्येव कुण्डलनाम् । तन्मन्ये दण्डपातेन मारित इति । अहो मे अकाण्डभीरुता । एषा कापि पत्रसंपुटिका । नूनमेषा केनापि देवीपरिजनेनाकाण्डभीरुकं मां परि-

हसितुमत्र निबद्धा । भवतु, किमत्राक्षराणीति प्रेक्षिष्ये । किमेतत् ! प्रियवयस्यमुद्दिश्य कमलजाया मदनलेख इव । अद्य खलु तस्याः प्रियसखी मृणालिका तरुशिखिलनिद्रेण मयात्र संचरन्तीव दृष्टा । तया नूनं महाराजस्यैव दर्शयिष्यतीति एषा पत्रसंपुटिका निबद्धा । श्रुयत चैतत् । यत्सा कमलजा प्रियवयस्यासक्तमानसेति श्रूयते । नूनमनयैव मृणालिकया निजसखीविनोदनाय तच्चित्रफलकमप्यपहृतम् । एष एकाकी प्रियवयस्यः समागच्छति । तदेनमिमां पत्रसंपुटिकां दर्शयित्वा किमप्युज्जीवयिष्यामि ।] [इत्युपसर्पति ।

(ततः प्रविशति उत्कण्ठितो राजा ।)

**राजा—**

पर्यावृत्तपयोधरं विवलितप्रत्यग्रमुक्तालतं
साचीकृत्य मुखारविन्दमनघं सव्याजमेणीदृशा ।
शृङ्गारैकरसैरपाङ्गवलनैश्चेतो हृतं यत्तदा
प्रत्याहृत्तिकथामपि स्मरति न प्रायस्तदद्यापि मे ॥

**विदूषकः—** (उपसृत्य) जेदु पिअवअस्सो ।

[ जयतु प्रियवयस्यः ।]

**राजा—** सखे, उपविश्यताम् ।

[ विदूषकः उपविशति ।

**राजा—** (सानुध्यानम्)

मुधाकृतसुधाकरं मुकुरमण्डलीसंपदा-
मसासहि सरोरुहामपि च गर्वसर्वंकषम् ।

परिस्फुरति मे पुरः प्रसवसायकप्राभृतं
मृदुस्मितमरीचिकं मृगदृशो मुखाम्भोरुहम् ॥ २ ॥

(सवितर्कम्)

साधारणानि पृथिवीसलिलादिमानि
सत्यं कदापि न हि कारणतां भजेयुः ।
शक्तः स्वभूरपि न सृष्टिविधावमुष्याः
को वा विधिस्तदिह कानि च कारणानि ॥ ३ ॥

(विमृश्य) इदमिह तत्त्वम् ।

शशाङ्कान्तर्नभसा नभो नवसुधासारेण पाथस्तथा
श्रीखण्डाचलमारुतेन मरुतं ज्योतिस्तडिज्ज्योतिषा ।
कर्पूरोत्करकर्दमेन मृदमप्युत्पाद्य पुष्पेषुणा
चेतो वञ्चयितुं मदीयमह हा सेयं समुत्पादिता ॥ ४ ॥

(विदूषकं प्रति) सखे, सखेदमिदं हृदयं केन वा पायेन विनोदयामि ?

**विदूषकः**— (स्वगतम्) हन्त गाढं णिवडिओ एसो सुमसरस-बरवाउरासु । तह वि णं खणमेत्तं परिहसिअ पत्तसम्पुडिअं दंसइस्सम । (प्रकाशम्) वयस्स, किं आणइस्सं मोदअखण्डाइ ?

[हन्त गाढं निपतित एष सुमशरशबरवागुरासु । तथा-प्येनं क्षणमात्रं परिहस्य पत्रसंपुटिकां दर्शयिष्यामि । वयस्य, किमानेष्यामि मोदकखण्डानि ?]

**राजा**— नायमवसरः परिहासस्य । संप्रति हि—

आलिम्पेद्यदि चन्दनैरतिघनैरङ्गं पटीराचलः
सिञ्चेत्किं च सुधाकरो यदि सुधासारोर्मिकाशीकरैः ।

मालेयक्षितिभृत्स्वयं यदि हिमप्राग्भारतः प्लावये-
त्संतापः स्मरदीपितो मम तदा शान्तिं भजेत क्षणम् ॥

(विचिन्त्य) सखे, किमेवं तामपि तरललोचनां तरलयति चित्तजन्मा ?

**विदूषकः**— (स्वगतम्) एसो एव्व ओसरो पत्तसंपुडिआदंसणस्स। (प्रकाशम्) णाहं देवण्णो। एसा उण का वि सउणसम्पुडिआ। ता एत्थ सउणं पेक्खदु भवन्तो।

[एष एवावसरः पत्रसंपुटिकादर्शनस्य । नाहं दैवज्ञः । एषा पुनः कापि शकुनसंपुटिका । तदत्र शकुनं पश्यतु भवान् ।]

[इति पत्रसंपुटिकामर्पयति ।

**राजा**—(सबहुमानमादाय सप्रणिधानमवलोकयन्सखेदम्)

गात्रे गात्रे गलदुपरमो गाढरूढः प्रकम्पो
हस्तन्यस्तं हर हर हठादाक्षिपत्येव पत्रम् ।
नीरन्ध्रं द्राङ् निरवधितया निष्पतन्बाष्पपूरो
दृष्टिं रुन्द्धे दृढतरमहो दैवमस्माद्विरोधि ॥ ६ ॥

तदिदानीं सखे, भवतैव वाच्यताम् । [इति विदूषकहस्ते ददाति ।

**विदूषकः**— (प्रतिगृह्य वाचयति ।)

सदृशी तवेति गर्वस्त्वयि मे घन इत्यसासिर्क वचनम् ।
किमिह बहुनेत्युपेक्षा त्वमेव जानासि करणीयम् ॥ ७ ॥

**राजा**— अहो गीर्वाणवाण्यामपि कीरवाण्याः प्रावीण्यम् । (स्वयमेव 'सदृशी तव' इत्यादि पठन्)

सुधामधुरिमस्मृतावपि हरेः स्मरन्ती तथा
नवेक्षुरसमाक्षिकश्रियमधिक्षिपन्ती भृशम् ।
कचाकचिविधायिनी सरसयापि मृद्वीकया
वचोरचनचातुरी वरतनोः कथं वर्ण्यताम् ॥ ८ ॥

(विदूषकं हस्तेन गृहीत्वा)

अपि नाम सखे, तस्या एव तामरसलोचनायाः सदृशानुराग-पिशुनोऽयं मदनलेखः ?

**विदूषकः**— अह इं ।
[अथ किम् ।]

**राजा**— (पुनः पुनः सदृशा तवेत्यादि पठित्वा)

कान्तास्वहस्तलिखितं सदृशानुराग-
कर्णेजपं सरसजन्पमिमं निशम्य ।
सौधाकरैरिव करैरभिषिच्यमानं
चेतोऽधुना किमपि निर्वृतिमभ्युपैति ॥ ९ ॥

**विदूषकः**— जुत्तं एदं, सरिसं एदं, जं परोप्परसमाअमं अन्तरेण वि सरिसाणुराओ एव्व हि जुआणं पोम्मिणीदिण-अराणं विअ किं वि कोदूहलं उल्लासेइ ।

[युक्तमेतत्, सदृशमेतत्, यत्परस्परसमागममन्तरेणापि सदृशानुराग एव हि यूनोः पद्मिनीदिनकरयोरिव किमपि कौतूहलमुल्लासयति ।]

**राजा**— सखे, कथमिदमुपलब्धं भवता ?

**विदूषकः**— एव्वं विअ ।

[एवमिव ।]

[इति कर्णे कथयति ।

**राजा**— एतादृशानां भागधेयानामभाजनमात्मानं मन्यमानमिदं न विश्वसिति मे हृदयम् ।

**विदूषकः**— मइ वि एव्वं अविस्सासस्सीलस्स तुह कहं अप्पाणम्मि वा विस्सासो ?

[मय्यप्येवमविश्वासशीलस्य तव कथमात्मनि वा विश्वासः ?]

**राजा**— (स्पर्शमभिनीय सोद्वेगम्) कोऽयमिहाकुलयति मामविरतं कुकूलानलकणगणविकिरणेन ?

**विदूषकः**— (स्वगतम्) हन्त चन्दिआपरिमळं एव्व कुकूळाणळं आकळेदि ।

[हन्त चन्द्रिकापरिमलमेव कुकूलानलमाकलयति ।]

**राजा**— (विमृश्य) अहो मम भ्रान्तिः ! संप्रति हि,

कन्दलन्ति कतिचित्तमोमुषः
कैरवस्फुरणकेलिकामुषः ।
विप्रयुक्तजनतैकविद्विषः
पश्यताः शिशिररोचिषस्त्विषः ॥ १० ॥

**विदूषकः**— वअस्स, पेक्ख पेक्ख—

आसावारविळासिणीकुअतडीपाटीरचच्चाइदा
कंदप्पद्दिवकण्णजाहचमरीवाळप्पपंचप्पहा ।

सग्गंगाजलवेणिआसहअरी तेल्लोक्कसोहत्तली-
सोहालेवचमक्किअब्भमअरी जोण्हा समुज्जिम्भइ ॥

[वयस्य, पश्य पश्य,

आशावारविलासिनीकुचतटीपाटीरचर्चायिता
कंदर्पद्विपकर्णजाहचमरीवालप्रपञ्चप्रभा ।
स्वर्गङ्गाजलवेणिकासहचरी त्रैलोक्यसौधस्थली-
सौधालेपचमत्कृतिभ्रमकरी ज्योत्स्ना समुज्जृम्भते ॥]

**राजा—** सखे, संप्रति हि,

तारकाण्डपटले प्रथमाब्धे-
र्वीचिभिर्वियति दूरविकीर्णे ।
राजहंस इव तत्प्रविचेतुं
शीतदीधितिरितः समुदेति ॥ १२ ॥

अपि च,

लक्ष्यचिह्नकिटिपोतकमुच्चै-
रायतांशुचयगाढनिबद्धम् ।
चन्द्रमण्डलमिदं विषमेषो-
र्वीतशाटवलयं परिशङ्के ॥ १३ ॥

(निर्वर्ण्य)

विकसन्मृदुस्मितमरीचिवीचिकं
वदनारविन्दमतुलं मृगीदृशः ।
तुहिनांशुमण्डलमिदं दरस्फुर-
न्नवकौमुदीकमनुकर्तुमीहते ॥ १४ ॥

तदेनमतिदुर्लभार्थाभिलाषदुर्ललितं रोहिणीवल्लभं किमप्युपालभे ।

तन्वङ्गीवदनारविन्दसुषमासाम्यैषिणा कौतुका-
दिन्दो मन्दमते त्वया कुचभरस्थाने कलङ्कः कृतः ।
निक्षिप्तं च तथा विलोचनपदे नीलाम्बुजं सौहृदा-
द्यद्यप्यस्तु तथापि तन्न भवतः स्वाभाविकं सौरभम् ॥

हन्त स एष दोषाकरो निजाभिलाषपरिहासपरं मामभिमतरोष इव परुषतरैः करैर्विशोषयति ! तदद्य कुत्र वार्शिष्टामपि दीर्घयामां त्रियामामतिवाहयामि !

**विदूषकः—** वअस्स, तुह किल मणोरहसिरी कमलआ णट्टसिक्खाजणिअस्समावणोदणस्स पडिणिसं वम्महुज्जाणं मिणालिआमेत्तसहाआ अहिवसइ त्ति मए सुदम् । ता अम्हे वि तहिं गच्छम्ह ।

[वयस्य, तव किल मनोरथश्रीः कमलजा नाट्यशिक्षाजनितश्रमापनोदनाय प्रतिनिशं मन्मथोद्यानं मृणालिकामात्रसहाया अधिवसतीति श्रुतं मया । तदावामपि तत्र गच्छावः ।]

**राजा—** तर्हि समादर्शय मन्मथोद्यानमार्गम्, येन गत्वा प्रियतमालोकनेन जन्म सफलयामि ।

**विदूषकः—** इदो इदो ।

[इत इतः ।]

[उभौ परिक्रामतः ।]

**राजा—** [पुरो निर्दिश्य] सखे, मन्दानां पटीरवसुधाधरतटीपटी-

रलताकुटीरवाटीपरिसरचंक्रमणचतुरगन्धवहस्तनंधयमन्दमन्दान्दोलितमाकन्दकुसुमनीरन्ध्रनिःष्यन्दमानमकरन्दरसतुन्दिलमिलिन्दसुन्दरीजनमधुरझंकाररवशृङ्गारितहरिदन्तरम्, उत्फुल्लनवरक्ताशोकस्तबकरागानुमितलाक्षारुणवसन्तलक्ष्मीपादविन्यासम्, अन्यादृशरामणीयकधन्यम्, सविधसरसीजलविहरमाणसरस्वतीसुहृद्यानं मन्मथोद्यानं कन्दलयति हृदानन्दभरमनन्ततरम्। तदत्र प्रविशावः।

[उभौ प्रवेशं नाटयतः।

**राजा—** (समन्तादवलोक्य)

आनाम्रैर्नवपल्लवैः पटकुटीलक्ष्मीं द्रुमास्तन्वते
मत्तो भृङ्गगणश्च यामिकधुरां धत्तेऽमितो बम्भ्रमन्।
माद्यत्कोकिलकूजितं कलयते सेनारवाडम्बरं
तन्मन्ये शिबिरं मनोजनृपतेरारामसारादिमम्॥ १६॥

(अन्यतो दत्तदृष्टिः)

उद्दामस्तबकस्तनामलिरवव्याजेन संलापिनीं
निश्च्योतन्मकरन्दबिन्दुनिवहस्वेदाम्बुसिक्ताङ्गकाम्।
उद्यत्कोमलपल्लवाधरदलामालिङ्ग्य वल्लीवधू-
माधत्ते मुकुलच्छलेन पुलकं माकन्दशाखी युवा॥ १७॥

(ततः परिक्रम्य सोद्वेगम्)

हन्त किमित्यागतमत्याहितस्थाने। यतः,

नवसौरभोच्चलितभृङ्गपङ्क्तिका-
करवालिकामदह कामपातकी।

विधुनोत्ययुक्तजनबाधनोन्मुखः
कलकण्ठनिःस्वनकठोरहुंक्रियः ॥ १८ ॥

तदन्यतो गच्छामि ।

(इति परिक्रम्य सोन्मादम्)

आपादचूडमसितांशुकपल्लवेन
हन्तावकुण्ठ्य परिशोषयितुं मनो मे ।
सौरभ्यसंपदनुमेयतनुः पुरस्ता-
त्संजीवनौषधिरियं मम संनिधत्ते ॥ १९ ॥

तदेनामनुनयामि । (उपसृत्य)

अवकुण्ठनशाठ्यमङ्गका-
त्कलकण्ठीनिनदं निरस्कुरु ।
भवतु क्षणमात्रमम्बुदा-
वरणात्क्षिप्तरुचिर्विनिर्गता ॥ २० ॥

**विदूषकः**— (स्वगतम्) हन्त उम्मत्तो विअ संवुत्तो ! का गई ?
(प्रकाशम्) कहिं दाणिं एत्थ तुह पिअदमा ?

[हन्त उन्मत्त इव संवृत्तः ! का गतिः ! कुत्रेदानीं तव
*प्रियतमा !*]

**राजा**— (निरूप्य सनिर्वेदम्)

अभिजातसौरभझरीसरीसृप-
भ्रमरीकदम्बकनिरन्तरीकृता ।
प्रतिभाति कापि नवमालतीलता
पुरतो हतोऽस्मि न पुनर्मृगेक्षणा ॥ २१ ॥

( इत्यपरतः परिक्रामितनाटितकेन स्पर्शसुखमभिनीय साश्चर्यम् )

चञ्चच्चन्द्रकरद्रवच्छशिशिलासौधप्रणालीगल-
द्धारापातविशीर्णशीकरपरीरम्भप्रियंभावुकाः ।
सौरभ्यातिशयातिलुभ्यदलिनीझंकारमृङ्कारिताः
किं न्वेतन्मरुदङ्कुरा मम मनःकौतूहलं तन्वते ॥ २२ ॥

( सपरामर्शम् ) नूनममी सारङ्गनयनाङ्गसङ्गतरङ्गितभागधेया भवेयुः । यावदेतदनुसारेण तामण्विष्यामि ।

[ इति परिक्रामति ।

( नेपथ्ये )

हला कमलए, कहिं वा मं वि उज्झिअ सअं एव्व किं वि किं वि मन्तअन्ती सुरहिणीसाससोरहभररभससंचलिअचंचरिअचउरझंकारसमाअण्णणसमअणीरन्धणिवडन्तणअणसलिलधारासेअणणहंपअजंबालदुग्गमे मग्गे पञ्चसाइं पदाइं गदुअ दुव्वहणिअम्बबिम्बभरणदुब्बलोरुकण्डा पदे पदे बलिअं खलसि ? ता चिट्ठ चिट्ठ । मं हत्थे ओलंबेहि ।

[सखि कमलजे, कुत्र वा मामप्युज्झित्वा स्वयमेव किमपि किमपि मन्त्रयमाणा सुरभिनिःश्वाससौरभभररभससंचालितचञ्चरीकचतुरझंकारसमाकर्णनसमयनीरन्ध्रनिपतन्नयनसलिलधारासेचननभःपङ्कजम्बालदुर्गमे मार्गे पञ्चषाणि पदानि गत्वा दुर्वहनितम्बबिम्बभरणदुर्बलोरुकाण्डा पदे पदे बलवत्स्खलसि ? तत्तिष्ठ तिष्ठ । मां हस्ते अवलम्बस्व ।]

राजा— ( आकर्ण्य पुरोऽवलोक्य सानन्दम् )

एकेनात्मसखीं करेण मृदुना हस्तेऽवलम्ब्यापरं
मध्ये न्यस्य सुदुर्वहोरुजघनश्रान्तोरुकाण्डद्वयम् ।
उद्वेलश्वसितानुकम्पितकुचस्रस्तोत्तरीयाञ्चलं
सांनिध्यं समुपैति संप्रति दृशोरस्माकमाश्चर्यो रसः ॥

(ततः प्रविशति मृणालिका कमलजा च ।)

**कमलजा—** (स्वगतम्) किं णु खु मह मअणलेहं अज्जचक्कवाओ महाभाअस्स दंसइस्सदि ? दंसिए वा तस्स किं सुमरणविसईभविस्सम् ? (विचिन्त्य) अह वा एआरिसाणं भाअहेआणं मइ मन्दभाइणीए का कहा ?

[किं नु खलु मम मदनलेखमार्यचक्रवाको महाभागाय दर्शयिष्यति ? दर्शिते वा तस्य किं स्मरणविषयीभविष्यामि ? अथ वा एतादृशानां भागधेयानां मयि मन्दभागिन्यां का कथा ?]

**मृणालिका—** (स्वगतम्) अहो एदाए अदिभूमिं गओ विरहसंदावो ! तह हि — दाणिं इमाए,

णीसाससोरहभरापडिआलिपंती
तापाउला पडइ पुप्फसम्मि सीदे ।
देहाणलेण अ मिसं अभिअंपएण
तम्मन्ति अन्तिअळदाणवपल्लवाइ ॥ २४ ॥

(प्रकाशम्) हळा, किळन्तासि दुव्वहणिअम्बभरेण । ता एत्थ णिरन्तरकोरइअणोमालिआळदंतरकोहराणिहुअमहुअरकुळकळरव-

दिण्णकण्णूसवे आवुन्तविअअवउलकुसुमविसिगरमधूलिआसीअ-
ळतळे ळदाघरे उवविसम्हे ।

[अहो एतस्या अतिभूमिं गतो विरहसंतापः! तथा हि—
इदानीमस्याः,

निःश्वाससौरभभरापतितालिपङ्क्ति-
स्तापाकुला पतति पुष्परसे शीते ।
देहानलेन च भृशमभिसंपन्नेन
ताम्यन्ति अन्तिकलतानवपल्लवानि ॥

सखि, क्लान्तासि दुर्वहनितम्बभरेण । तदत्र निरन्तरको-
रकितनवमालिकालतान्तरकोटरनिसृतमधुकरकुलकल-
रवदत्तकर्णोत्सवे आघूर्णितविकचबकुलकुसुमविसृमरमधू-
लिकाशीतलतले लतागृहे उपविशाव ।]

[ इत्युपविशतः ।

**राजा**— सखे, यावदावामप्यस्यैव लताभवनस्य पश्चिमभागे नि-
गूढावनयोः परस्परविस्रम्भालापेषु दत्तकर्णौ भवाव ।

[ इत्युभौ तथा कुरुतः ।

**विदूषकः**— वअस्स, दिट्ठिआ उवणदं दे णअणभाअहेअं । ता
एहिं एव्व अच्छीइं सफळेहि ।

[वयस्य, दिष्ट्या उपनतं ते नयनभागधेयम् । तदिदानीमेव
अक्षिणी सफलयस्व ।]

**राजा**— (आपादचूडमवलोक्य) संप्रति सखे, पश्य पश्य,

पादाम्भोजादभिमुखतया कान्तिपूरेषु खेल-
न्नाभीकूपे नयनशफरो मामको हन्त मग्नः ।
भूयो रोमावलिरुचिसरीपातलोभादुदञ्च-
न्नासाभूषाकपटवडिशे कीलितोऽभूदमुष्याः ॥ २५ ॥

**विदूषकः**— (निर्वर्ण्य) वअस्स, एदाए वि वलिअं पदंसेदि पञ्चसरो णिअभुअदण्डसोण्डीरं । तह हि एसा—

पडिअमिमम्मुत्ती
णिग्घिणणीसाससिण्णविम्बोट्ठी ।
करकमलसाइअमुही
मुत्तो विरहो विआभाइ ॥ २६ ॥

[वयस्य, एतस्यामपि बलवत्प्रदर्शयति पञ्चशरो निजभुजदण्डशौण्डीर्यम् । तथा हि एषा—

पाण्डिमनिमग्नमूर्ति-
र्निर्घृणनिःश्वासखिन्नबिम्बोष्ठी ।
करकमलशायितमुखी
मूर्तो विरह इवाभाति ॥]

**राजा**— सखे, सम्यगुपलक्षितम् । अस्याः किल,

प्रतिनवशरकाण्डस्वच्छमूलौ कपोलौ
श्वसितमधिकघातोत्कम्पितोरोजकुम्भम् ।
नयनयुगमजस्रं निष्पतद्बाष्पपूरं
शिव शिव तनुवल्ली मूर्तिमत्यार्तिरेव ॥ २७ ॥

**मृणालिका**— (स्वगतम्) अहो एदाए तस्सि महाभाए अणु-

राअबन्धो, जं दाणिं पत्थुदं वि पसंगं विसुमरिअ तं एव्व चिन्तेदि !

[अहो एतस्यास्तस्मिन्महाभागे अनुरागबन्धः, यदिदानीं प्रस्तुतमपि प्रसङ्गं विस्मृत्य तमेव चिन्तयति !]

**कमलजा**— (स्वगतम्) अहो मे चिन्तापरवसदा, जं वक्कसेसो ण सुणिदो! (प्रकाशम्) सहि, तदो तदो ।

[अहो मे चिन्तापरवशता, यद्वाक्यशेषो न श्रुतः! सखि, ततस्ततः ।]

**राजा**—

अधुना सुधारससरीति सुभ्रुवो
वचनं विशल्यकरणीमुपेयुषः ।
पुलकप्ररोहमिषतो ममान्तरा-
द्बहिरुद्गताः प्रसवबाणसायकाः ॥ २८ ॥

**मृणालिका**— सहि, तदो अ तेण उवधाणीकिदं चित्तफलअं घेत्तूण आअदम्हि ।

[सखि, ततश्च तेनोपधानीकृतं चित्रफलकं गृहीत्वा आगतास्मि ।] [इति चित्रफलकमर्पयति ।

**विदूषकः**— दाणिं उच्छिण्णो संसअतन्तू ।

[इदानीमुच्छिन्नः संशयतन्तुः ।]

**राजा**— सखे, भवत्प्रमादोऽप्युपकाराय ।

**कमलजा**— (चित्रफलके निजचरणपतितं राजानमालोक्य) महाभाअ, उट्ठिट्ठ उट्ठिट्ठ । अणुइदं एदम् ।

[महाभाग, उत्तिष्ठोत्तिष्ठ । अनुचितमेतत् ।]

[इति चरणौ निकुञ्चयति ।

**राजा**— अयि मुग्धे, किमत्राऽनौचित्यम् ? इदमेव हि जन्मसाफल्यम् ।

**विदूषकः**— वअस्स, एसा चित्तगअं भवन्तं सच्चं मण्णइ ।

[वयस्य, एषा चित्रगतं भवन्तं सत्यं मन्यते ।]

**कमलजा**— हला, ण सुणोदि एसो मह वअणम्, ता तुमं एव्व णं उट्ठावेहि ।

[सखि, न शृणोत्येष मम वचनम् । तत्त्वमेवैनमुत्थापय ।]

**मृणालिका**— सहि, चित्तफलअं क्खु एदम् ।

[सखि, चित्रफलकं खल्वेतत् ।]

**कमलजा**— (स्वगतम्) हन्त मुद्धम्हि । (पुनर्निरूप्य प्रकाशम्) अह अ एत्थ अक्खराइं ।

[हन्त मुग्धास्मि । अथ चात्राक्षराणि ।]

[ इति चित्राक्षराणि वाचयति ।

अयि संदिग्धानि न किमपि
सोऽहं त्वयि वर्तते हि मे चेतः ।
पृच्छतु तदेव भवती
वार्तां मे त्वत्कृते स्मरेण कृताम् ॥ २९ ॥

**मृणालिका**— सहि, तुमं एव्व धण्णा, जं एव्वं महाभाएण अणुग्गहिदासि ।

[सखि, त्वमेव धन्या, यदेवं महाभागेनानुगृहीतासि ।]

**कमलजा**— हला, सव्वं एदं मं परिहसिदुं तुए किदं कवडण-

दव्वं त्ति तक्केमि । किं मं एव्वं कवडणाडिआए लज्जेसि !

[सखि, सर्वमेतन्मां परिहसितुं त्वया कृतं कपटनाटकमिति तर्कयामि । किं मामेवं कपटनाटिकया लज्जयसि !]

[इति सप्रणयकोपं मुखं परिवर्तयितुमिच्छति ।]

**राजा—** (स्वगतम्) अवमेवावसरो ममास्मानं दर्शयितुम् । (प्रकाशम्) महाभागे, न कपटनाटकमिदं मृणालिकायाः । सत्यमेवेदम् । [इत्युपसर्पति ।

(कमलजा राजानं दृष्ट्वा ससंभ्रममुत्तिष्ठति ।)

**राजा—** महाभागे, अलमलमुपचारावरणप्रयासेन ।

**कमलजा—** (स्वगतम्) हन्त सोन्दरमेत्तसेसो सुहअसेहरो !

[हन्त सौन्दर्यमात्रशेषः सुभगशेखरः !]

**मृणालिका—** जेदु जेदु महाराओ । (कमलजां प्रति सस्मितम्) हळा, दाणिं वि कुप्पेहि ।

[जयतु जयतु महाराजः । सखि, इदानीमपि कुप्य ।]

**विदूषकः—** (सकोपम्) हुं णाए ण एसो बह्मणो वन्दीअदि ।

[हुम् अनया नैष ब्राह्मणो वन्द्यते ।]

**मृणालिका—** अज्ज, मरिसेहि । हळा, पणम महाभाअपिअवअस्सं ।

[आर्य, मर्षय । सखि, प्रणम महाभागप्रियवयस्यम् ।]

(कमलजा सस्मितं प्रणमति ।)

**विदूषकः**— सोत्थि भोदीए ।

[स्वस्ति भवत्यै ।]

**मृणालिका**— इदो फडिअसिलातलं अलंकरोदु महाभाओ ।

[इतः स्फटिकशिलातलमलंकरोतु महाभागः ।]

[सर्वे यथोचितमुपविशन्ति ।

**राजा**— (स्वगतम्)

मम कृते मदनो दयितामिमां
नवशिरीषदलाधिककोमलाम् ।
व्यथयतीति मनो मम मोदते
किमपि खेदमुपैति च सांप्रतम् ॥ ३० ॥

(प्रकाशम्)

रसानुवेधेन सुवर्णभावं
दुर्वर्णमेतीति हि किंवदन्ती ।
सुवर्णमङ्गं तव सुन्दरीदं
दुर्वर्णमासीदधुना कियेतत् ॥ ३१ ॥

**विदूषकः**— णं होदि रसाणुवेहेण पच्चक्खं एव्व सुवण्णं वि दुव्वण्णं ।

[ननु भवति रसानुवेधेन प्रत्यक्षमेव सुवर्णमपि दुर्वर्णम् ।]

**कमलजा**— (अपवार्य) इळा मिणाळिए, ळज्जाए णाहं पारेमि महाभाअं पडिवचुं । ता तुमं एव्व भण ।

[सखि मृणालिके, लज्जया नाहं पारयामि महाभागं प्रतिवक्तुम् । तत्त्वमेव भण ।]

**मृणालिका**— महाभाअ, मह पिअसही मह मुहेण विण्णवेदि ।

[महाभाग, मम प्रियसखी मम मुखेन विज्ञापयति ।]

**राजा**— अवहितोऽस्मि ।

**मृणालिका**— (संस्कृतमाश्रित्य)

चन्द्रातपालेपचमत्कृतोऽपि
चन्द्रोपलश्चन्दनपङ्किलोऽयम् ।
अहो किमेतज्ज्वदङ्गसङ्ग-
सहायसो रीतिमुरीकरोति ॥ ३२ ॥

**राजा**— यदैषा तव प्रियसखी नयनातिथीकृता, तदा प्रभृति,

अमुष्या नेत्राभ्यां श्वसितमतिदीर्घं स्मितरुचे-
र्वपुर्गौरं मध्यादधिकतरशून्या मतिरपि ।
उरोजाभ्यामाभ्यां व्यसनमतितुङ्गं किमपरं
बत भ्रूभङ्गादप्यजनि कुटिलः पञ्चविशिखः ॥

**कमलजा**— (स्वगतम्) हन्त मह किए एव्वं अणुहोदि महाभाओ !

[हन्त मम कृते एवमनुभवति महाभागः !]

**मृणालिका**— (संस्कृतमाश्रित्य) इदमपि श्रूयतां महाभागेन । यदा पुनरस्या भवदवलोकनेन सफलमजनि नयनयुगलम्, तदा प्रभृत्यस्याः,

हारा वज्रप्रहारा भवनशुकवधूचाटुपाठा विपाठा
धारागाराणि कारागृहगहनगुहाः शीतभानुः कृशानुः ।
सख्यालिङ्गः स्फुलिङ्गः सरसिजकलिकाधूलिरङ्गारपालि-
र्नर्मालापाः प्रलापाः शिव शिव सुतनोर्माल्यमप्युग्रशल्यम् ॥

(नेपथ्ये)

अये मृणालिके, त्वरय कमलजां भूमिकापरिग्रहाय ।
सांप्रतं किल नटनालोकनधृतकुतूहला देवी वर्षवरकु-
ब्जवामनपरिचारिकाप्रायं नाट्यमण्डपमाजिगमिषति ।

[सर्वे समाकर्ण्य विषादं नाटयन्ति ।

**मृणालिका**— अणुजाणादु मं महाभाओ ।
[अनुजानातु मां महाभागः ।]

**राजा**— (सनिर्वेदम्) अलङ्घनीयो हि देशिकादेशः ।

**मृणालिका**— महाभाअ, तवस्सिणी एसा ण विसुमरणिज्जा ।
[महाभाग, तपस्विन्येषा न विस्मरणीया ।]

**कमलजा**— (अपवार्य) हळा, गिह्ण चित्तफलअं ।
[सखि, गृहाण चित्रफलकम् ।]

[मृणालिका नाट्येन गृह्णाति । कमलजा विश्लेषदुःखं नाटयन्ती सह सख्या निष्क्रान्ता ।

**राजा**— (सनिर्वेदम्) अहो प्रियतमाविप्रकर्षादभिरुचितस्यापि देशस्यायमपुरः संनिवेशः । तथा हि—

लीलोद्यानमिदं तदेव दहनालीढं किलालक्ष्यते
तच्चेदं लवलीनिकुञ्जभवनं धत्तेतरां वैधुरीम् ।
सैवेयं नवमालिकासुममयी शय्यापि शल्यायते
चेतो हन्त तदेव कामपि दशां मोहावहां गाहते ॥

(विचिन्त्य) वयस्य, कतिचित्पदानि वा प्रियतमामनुसरन् जन्म सफलयामि । समादर्शय पन्थानम् ।

**विदूषकः**— इदो इदो वअस्सो

[इत इतो वयस्यः ।]

[इति निष्क्रान्ताः सर्वे ।

इति द्वितीयोऽङ्कः



# तृतीयोऽङ्कः ॥

(ततः प्रविशति मायामयकमलजासहितो विदूषकः ।)

**विदूषकः**— [मायाकमलजां विलोक्य] साहु सहे कारण्डव, साहु । सुसरिसी किदा कमळजाए एसा माआमई कण्णा । (निरूप्य) अहो माआमाहप्पम्, जं तत्तवेइणो वि मह सक्खा कमळ-आबुद्धी ण चळइ । (विचिन्त्य) सच्चं वञ्चिदो एव्व णाए पिअ-वअस्सो । जाव साहाअकस्स मिणाळिअं पेक्खामि । (पुरोऽवलोक्य) इदो एव्व पज्जाउळा विअ मिणाळिआ समाअच्छदि । उवस-प्पामि दाव णम् ।

[इत्युपसर्पति ।

[साधु सखे कारण्डव, साधु । सुसदृशी कृता कमलजाया एषा मायामयी कन्या । अहो मायामाहात्म्यम् । यत्त-त्त्ववेदिनोऽपि मम साक्षात्कमलजाबुद्धिर्न चलति । सत्यं वञ्चित एवानया प्रियवयस्यः । यावत्साहायकाय मृणालिकां पश्यामि । इत एव पर्याकुलेव मृणालिका समागच्छति । उपसर्पामि तावदेनाम् ।]

[ततः प्रविशति यथानिर्दिष्टा मृणालिका ।]

**मृणालिका**— हद्धि हद्धि । एत्तिअं काळं गवेसअन्तीए मए ण दिट्ठं चित्तफळअम् । हा ! कहिं णु पब्भट्ठं हवे ?

[हा धिक् हा धिक् । एतावन्तं कालं गवेषयन्त्या मया न दृष्टं चित्रफलकम् । हा ! कुत्र नु प्रभ्रष्टं भवेत् ?]

**विदूषकः**— अइ मिणालिए, पस्सपरिवट्टिणं वि मं अणवलोइअ कहिं गच्छसि?

[अयि मृणालिके, पार्श्वपरिवर्तिनमपि मामनवलोक्य कुत्र गच्छसि?]

**मृणालिका**— अज्ज चक्कवाअ, चिन्तापरवसाए मए ण दिट्ठोसि।

[आर्य चक्रवाक, चिन्तापरवशया मया न दृष्टोऽसि।]

**विदूषकः**— किं चिन्ताए काळणम्?

[किं चिन्तायाः कारणम्?]

**मृणालिका**— अज्ज ण आणामि कहिं पब्भट्ठं चित्तफलअं त्ति।

[आर्य, न जानामि कुत्र प्रभ्रष्टं चित्रफलकमिति।]

**विदूषकः**— (सावज्ञम्) किं एत्तिअमेत्तम्?

[किमेतावन्मात्रम्?]

**मृणालिका**— (पार्श्वतो मायाकमलामवलोक्य सविभ्रमम्) सहि कमलए, कहं आआरिअमवीसादो अणुपदं एव्व णिग्गदासि?

[सखि कमलके, कथमाचार्यमविश्वासादनुपदमेव निर्गतासि?]

**विदूषकः**— (विहस्य) अइ णेअं तुह सही, किंदु ताए सरिसी कारण्डवकिदा माआ।

[अयि, नेयं तव सखी, किं तु तस्याः सदृशी कारण्डवकृता माया।]

**मृणालिका**— अज्ज, किं णाए फळं?

[आर्य, किमनया फलम्?]

**विदूषकः**— किं अण्णं वअस्सविणोदणं अन्तरेण !

[किमन्यद्वयस्यविनोदनमन्तरेण ?]

**मृणालिका**— सुट्ठु ववसिदं अज्जेण ।

[सुष्ठु व्यवसितमार्येण ।]

**विदूषकः**— अइ, तुए खणमेत्तं एत्थ सहाअभूदाए होदव्वं ।

[अयि, त्वया क्षणमात्रमत्र सहायभूतया भवितव्यम् ।]

**मृणालिका**— अणुगहीदह्मि । दाणिं हि कमळआणअणसंभमाळोअणस्स महाभाअं आणेदुं देवी ववस्सइ । ता जाव देवी आअमिस्सदि दाव अम्हेहिं महाभाओ विणोदणिज्जो ।

[अनुगृहीतास्मि । इदानीं हि कमलजानटनसंभ्रमावलोकनाय महाभागमानेतुं देवी व्यवस्यति । तत् यावद्देवी आगमिष्यति तावदावाभ्यां महाभागो विनोदनीयः ।]

[इति निष्क्रान्तौ ।

प्रवेशकः ॥

(ततः प्रविशति राजा ।)

**राजा**— (साशंसम्)

किंचिद्व्यञ्जितमन्दहासकुसुमाकिञ्जल्ककिर्म्मीरितं
चञ्चत्कुण्डलचारुगण्डफलकं साचीकृतभ्रूलतम् ।
लोलापाङ्गविहस्तितश्रुतिशिरोनीलारविन्दस्मयं
बालाया वदनं पिबामि किमु तल्लीलावलन्मन्मथम् ॥

[स्पर्शमभिनीय] हन्त गन्धवहस्तनंधयोऽपि दन्तुरयति मम हृदन्तरे निरन्तरं संतापम् । तदेनं किंचिदभिवदामि ।

विदेहकन्याविरहार्तिविह्वली-
भवत्ककुत्स्थस्थपतिप्रमोदनः ।
प्रभञ्जनायुग्जनताविभञ्जना-
त्वदाञ्जनेयो जनिमासदत्कथम् ॥ २ ॥

किं च,

अवैमि मन्दानिल चन्दनाचलो
भवत्प्रसूर्भाग्यविपर्ययेण नः ।
पितामहप्रीतिमता हनूमता
निपातितः सेतुकृते न नीरधौ ॥ ३ ॥

(परितापं निरूपयन्)

क्वचित्सज्जीकुर्वन्कुसुमविशिखश्चापमयते
क्वचिन्मन्दो वातः किरति बहु हालाहलविषम् ।
क्वचिद्राकाचन्द्रो विसृजति कुकूलानलकणा-
नहं बाध्यस्त्वेषामहह विधिवैमुख्यमहिमा ॥ ४ ॥

हन्त किमत्र प्रतिविधेयम् !

(विचिन्त्य, आकाशे लक्ष्यं बद्ध्वा)

याचेऽहं रचिताञ्जलिर्निगिर भो राहो सुधादीधितिं
शेष त्वं च नय स्फटादशशतैर्निःशेषतां मारुतम् ।
पाहि त्वं समयोऽयमेव भगवन्विश्वैकरक्षामणे
भूयः संहर संहराशु मदनं दग्धावशिष्टं पुरा ॥ ५ ॥

(सस्मरणम्) हन्त किमिति चिरयति प्रियोदन्तगवेषणाय गतः
प्रियवयस्यः !

(प्रविश्य)

**विदूषकः**— वअस्स, वड्ढेहि वल्लहालाहेण ।

[वयस्य, वर्धस्व वल्लभालाभेन ।]

**राजा**— सखे, किं विदितप्रियतमोदन्तोऽसि ?

**विदूषकः**— (सान्तर्हासम्) ण केवलं विइओ वल्लहोदन्तो । किं तु सा एव्व समाणीदा ।

[न केवलं विदितो वल्लभोदन्तः । किं तु सैव समानीता ।]

**राजा**— (सहर्षम्) सखे, अपि नाम सत्यमिदम् ?

**विदूषकः**— णं भणामि ।

[ननु भणामि ।]

**राजा**— सखे, सप्रकारं प्रियतमागमनं श्रोतुमिच्छामि ।

**विदूषकः**— (स्वगतम्) किं भणिस्सं । होदु एव्वं । (प्रकाशम्) वअस्स, दाणिं किल मए णट्टअविलोअणस्स सव्वेसु देवीपरिअणेसु मिळिदेसु णिहुअदरं गदुअ रङ्गसाळादुवारवेदिआणिग्गळिओ सो दुट्ठवाणरो उम्मुक्को ।

[किं भणिष्यामि । भवत्वेवम् । वयस्य, इदानीं किल मया नटनविलोकनाय सर्वेषु देवीपरिजनेषु मिलितेषु निभृततरं गत्वा रङ्गशालाद्वारवेदिकानिर्गलितः स दुष्टवानर उन्मुक्तः ।]

**राजा**— ततस्ततः ।

**विदूषकः**— तदो अ तेण दुट्ठवाणरेण पळाइदेसु सव्वेसु देवी-

परिअणेसु कहं वि पलाअन्ति कमलअं मिणालिअं च आहूअ आअदेम्हि ।

[तस्य तेन दुष्टव्यानरेण पलायितेषु सर्वेषु देवीपरिजनेषु कथमपि पलायमानां कमलकां मृणालिकां चाहूय आगतोऽस्मि ।]

**राजा**— साधु सखे, साधु । इदं ते पूर्णपात्रम् ।

(इति कटकमर्पयति ।)

**विदूषकः**— (स्वगतम्) अहो मह मिच्चावादित्तणम् ।

[अहो मम मिथ्यावादित्वम् !]

**राजा**— (सौत्सुक्यम्) सखे, किमिदानीमपि विलम्ब्यते नित-म्बिन्या ?

(विदूषको नेपथ्याभिमुखमवलोक्य संज्ञापयति ।)

(ततः प्रविशति मायाकमलकां संचारयन्ती मृणालिका ।)

**मृणालिका**— इदो इदो पिअसही ।

[इत इतः प्रियसखी ।]

**राजा**— (सानन्दम्)

अवलम्ब्य संप्रति सखीकराम्बुजं
शनकैः पदानि सरसानि तन्वती ।
कुचकुम्भभारपरिखिन्नमध्यमा
कुतुकेन मामभिसरत्यनिन्दिता ॥ ६ ॥

(सौत्सुक्यम्)

उत्तुङ्गस्तनकुम्भगौरववशादुच्चैरुदञ्चद्द्वयथा
मध्यस्येत्यवधार्य यद्यपि गतिर्मन्दायते पादयोः ।
मायस्तन्वि तथापि मे न सहते पञ्चेषुघोराशुग-
श्रेणीपातपरास्तधैर्यमधुना चेतो विलम्बं गतेः ॥

(इति स्वयमुपसर्पति ।)

**मृणालिका**— जेदु महाराओ ।

[जयतु महाराजः ।]

**राजा**— अपि कुशलं तव सख्याः ?

(कमलजा सख्याः कर्णे कथयतीव ।)

**राजा**— किं वचः सुरभयति मधुरवाणी ?

**मृणालिका**— महाराअ, विण्णवेदि मह पिअसही— अज्ज कुसलं सारसिआदेवीदइददंसणेणेत्ति ।

[महाराज, विज्ञापयति मम प्रियसखी— अद्य कुशलं सारसिकादेवीदयितदर्शनेनेति ।]

**राजा**— कमलजादयितेति वक्तव्यम् ।

(कमलजा लज्जानाटितकेनावनतमुखी तिष्ठति ।)

**राजा**— (निर्वर्ण्य स्वगतम्)

आलोललोचनमरीचिपरम्पराभि-
र्नीलोत्पलस्रजमिवादधती स्वहारम् ।
दुग्धे त्रपाभरदरानतकंधरेयं
मुग्धेन्दुसुन्दरमुखी मुहुरुत्सवं नः ॥ ८ ॥

(प्रकाशम्)

मृणालिके, सेयमभिसरणसंभ्रमेण परिश्रान्तेव संलक्ष्यते । तदत्र चन्द्रकान्तशिलातले समुपविशामः ।

(इत्युपविशति ।)

**विदूषकः**— मिणालिए, उवबेसेहि णम् ।

[मृणालिके, उपवेशयैनाम् ।]

**मृणालिका**— सहि, तुमं वि एत्थ उवबिसिअ विस्समसुहं लेहि ।

[सखि, त्वमपि अत्रोपविश्य विश्रमसुखं लभस्व ।]

(कमलजा सापत्रपेव तिष्ठति ।)

**मृणालिका**— महाराअ, ण सुणोदि एसा मह वअणं । ता तुमं एव्व भण ।

[महाराज, न शृणोत्येषा मम वचनम् । तत्त्वमेव भण ।]

**राजा**—

उत्तुङ्गस्तनजनितश्रमा समास्मि-
न्नुत्सङ्गे त्वमुपविश क्षणं मृगाक्षि ।
उत्ताम्यद्विपुलनितम्बबिम्बभारा-
दुद्धार्यं भवतु तदेतदूरुयुग्मम् ॥ ९ ॥

(कमलजा लज्जानाटितेन शिलातले उपविशति ।)

**राजा**— (स्वगतम्) हन्त शिलायामेवेयमुपविष्टा ! उपालभे तावदेनाम् । (प्रकाशम्)

सप्तलाकुसुमक्लृप्ततल्पभू-
संस्तवेऽपि धृतखेदमङ्गकम् ।
प्रस्तरस्थलपरिग्रहेण किं
खेदयस्यहह केवलोदरि ॥ १० ॥

(कमलजा किंचिदिव लज्जावती तिष्ठति ।)

**राजा**— (स्वगतम् । चेतः प्रति)

संव्यानेऽपहृते पयोधरतटात्सद्यः कृतस्वस्तिका-
माकृष्टे सिचये नितम्बफलकादापीडितोरुद्वयीम् ।
लोके नाभिसमीपसीम्नि नयने लज्जानताङ्गीमिमां
चेतो वाञ्छसि चुम्बितुं ननु पुरा संभल्पहो लज्जसे ॥

(प्रकाशम्) अयि कोमलपादपल्लवे,

यदिदं सुदुर्वहमिमं नितम्बम-
प्यविचार्य मामभिससार ते पदम् ।
तदिदं सरेणु परिचुम्ब्य मामिका-
मधमर्णतामपनिनीषुरस्म्यहम् ॥ १२ ॥

(कमलजा सख्याः कर्णे कथयतीव ।)

**राजा**— मृणालिके, किमाज्ञापयति कातराक्षी ?

**मृणालिका**— णाहं लज्जाए महाभाअं पडिवत्तुं अत्तणो पहवामि त्ति कहेदि मह पिअसही ।

[नाहं लज्जया महाभागं प्रतिवक्तुमात्मनः प्रभवामीति कथयति मम प्रियसखी ।]

**राजा—** कस्तर्हि प्रभवति ?

(कमलजा सख्याः कर्णे कथयतीव ।)

**मृणालिका—** एसा इदं विण्णवेदि— णं महाभाओ एव्वेत्ति ।

[एषा इदं विज्ञापयति— ननु महाभाग एवेति ।]

**राजा—**

चरणपरिचरणलीलादासः प्रभवामि तव कथं सुमुखि ।
कुचमणिमङ्गलकलशद्वयघटनादपि तु कलय घटदासम् ॥

(इत्यालिङ्गितुमुपसर्पति ।)

(विदूषको मृणालिका चोच्चैर्हसतः ।)

**राजा—** (निरूप्य, सलज्जम्) हन्त प्रियतमाप्रतिमादर्शनेन वञ्चितोऽस्मि ! सखे, किमियं कारण्डवमायाचातुरी ?

**विदूषकः—** अह इं ।

[अथ किम् ।]

**राजा—** सखे, कियन्तं कालमियं तिष्ठति ?

**विदूषकः—** जाव णिअलबन्धं ।

[यावन्निगलबन्धम् ।]

**राजा—** कः कोऽत्र भोः ?

(प्रविश्य)

**दौवारिकः—** आज्ञापयतु देवः ।

**राजा—** वेत्रहस्त, इमां प्रियतमाप्रतिमां मञ्जिनोदाय विकासभवनस्थां कुरु ।

**दौवारिकः—** तथा । (इति मायाकमलजया सह निष्क्रान्तः ।)

(नेपथ्ये मर्दलध्वनिः ।)

**मृणालिका—** अहो पउत्तो णडणसंभमो ! महाभाअ, भूमिआपरिग्गहत्थं मं पडिवालइस्सदि आआरिओ । ता मं अणुजाणीहि ।

[अहो प्रवृत्तो नटनसंभ्रमः ! महाभाग, भूमिकापरिग्रहार्थं मां प्रतिपालयिष्यत्याचार्यः । तन्मामनुजानीहि ।]

**राजा—** यथा रोचते भवत्यै । समयेष्वयं न विसर्जितः ।

**मृणालिका—** तह ।

[तथा ।] [इति निष्क्रान्ता ।

**राजा—** वयस्य, चिन्त्यतां प्रियतमादर्शनोपायः ।

**विदूषकः—** वअस्स, मा विक्कवो होहि । आअमिस्सदि देवी कमळआणडणविळोअणस्स भवन्तं आआरेदुं ।

[वयस्य, मा विक्लवो भव । आगमिष्यति देवी कमलजानटनविलोकनाय भवन्तमाकारयितुम् ।]

(ततः प्रविशति देवी मधुरिका च ।)

**देवी—** हञ्जे मधुकरिए, अज्जउत्तेण सह कमळआणडणकोसळं विळोअणिज्जं । ता गच्छ, जहिं अज्जउत्तो ।

[हञ्जे मधुकरिके, आर्यपुत्रेण सह कमलजानटनकौशलं विलोकनीयम् । तत् गच्छ, यत्रार्यपुत्रः ।]

**मधुकरिका—** जुत्तं ववसिदं भट्टिणीए । इदो इदो ।

[युक्तं व्यवसितं भट्टिन्या । इत इतः ।]

**देवी—** हञ्जे, एसो अज्जउत्तो अज्जचक्कवाएण सह चिट्ठइ । ता णं णिहुअअरं गदुअ कण्ठे गहिस्सं ।

[हञ्जे, एष आर्यपुत्र आर्यचक्रवाकेण सह तिष्ठति । तदेनं निभृततरं गत्वा कण्ठे ग्रहीष्यामि ।]

[इत्युपसर्पति ।

**मधुकरिका—** (स्खलनं नाटयन्ती अधो विलोक्य) भट्टिणि, इदं किं वि चित्तफलअं । (इति गृहीत्वा विलोक्य) भट्टिणि, पेक्खदु किं एत्थ आलिहिदंति ।

[भट्टिनि, इदं किमपि चित्रफलकम् । भट्टिनि, प्रेक्षतां किमत्रालिखितमिति ।]

[इति देव्यै दर्शयति ।

**देवी—** (विलोक्य सरोषम्) हञ्जे, एसा कमलआ । एसो तव्वलणपडिओ अज्जउत्तो । एदाइ संदेसक्खराइं । आ किं एवं !

[हञ्जे, एषा कमलका । एष तच्चरणपतित आर्यपुत्रः । एतानि संदेशाक्षराणि । आः किमेतत् !]

**मधुकरिका—** भट्टिणि, किं एदं त्ति भट्टा पुच्छिदव्वो ।

[भट्टिनि, किमेतदिति भर्ता प्रष्टव्यः ।]

[देवी सरोषं परिक्रामति ।

**राजा—** (सस्मरणम्) अपि नाम सखे, चित्रफलकं देव्या रक्ष्यते ?

**देवी**— अज्जउत्त, मए एव्व एदं रक्खिदादि ।
[आर्यपुत्र, मयैवैतद्रक्ष्यते ।]

[इति चित्रफलकं पुरस्तात्प्रक्षिपति ।

**राजा**— (विलोक्य सभयम् अपवार्य) हन्त किमापतितम् ! सखे, किमत्रोत्तरम् ?

**विदूषकः**— (अपवार्य) मुसिअद्व्वेण सह गहिदस्स चोरस्स जं उत्तरं, तं एव्व तुह वि ।
[मुषितद्रव्येण सह गृहीतस्य चोरस्य यदुत्तरम्, तदेव तवापि ।]

**राजा**— (सानुनयम्) देवि, नान्यथा शङ्कनीयम् । इयं हि देशान्तरे विलोकिता काचन कन्यका कारण्डवेनालिखिता । अहं वानेन वयस्येन परिहासायैवमालिखितः ।

**देवी**— इमाइं उण संदेसक्खराइं केण लिहिदाइं ?
[इमानि पुनः संदेशाक्षराणि केन लिखितानि ?]

**राजा**—

अयि सुमुखि न जानास्यात्मनो रूपधेयं
त्वयि विनिहितभावः प्रेक्षतेऽन्यां कथं वा ।
सततविहितसक्तिः सत्फलायां द्विरेफः
कलयति कलिकां किं कर्णिकारद्रुमस्य ॥

**देवी**— (जनान्तिकम्) हञ्जे, किं णेण सठेण । एहि, गच्छम्ह । (प्रकाशम्) अज्जउत्त, चिट्ठदु एदं । णिद्दापरवसम्हि । अणुजाणीहि मं गमणस्स ।

[हञ्जे, किमनेन शठेन । एहि, गच्छावः । आर्यपुत्र, तिष्ठत्वेतत् । निद्रापरवशास्मि । अनुजानीहि मां गमनाय ।]

[इति प्रस्थिता ।

**राजा**— (देवीं पटाञ्चले गृहीत्वा) अयि देवि, प्रसीद प्रसीद । त्वत्पादाभ्यां शपे । न मयेयं लिखिता ।

[इति पादयोः पतितुमिच्छति ।

**देवी**— (सकपटविनयम पादौ निकुञ्च्य) अज्जउत्त, अलं अलं अणुइदाअरणेण । सच्चं णिद्दापरवसम्हि ।

[आर्यपुत्र, अलमलमनुचिताचरणेन । सत्यं निद्रापरवशास्मि ।]

[इति सचेटी निष्क्रान्ता ।

**विदूषकः**— दिट्ठिआ देवी पसण्णा ।

[दिष्ट्या देवी प्रसन्ना ।]

**राजा** - अलमामोदेन । सखे, न विदितस्त्वया देव्या गभीरो भावः । पश्य,

विनयविहिताचारव्याजादरोधि सुदूरता
वचसि नयने भ्रूवल्ल्योर्वा व्यधायि न विक्रिया ।
अजनि विनयोऽत्यर्थं मिथ्याप्रसादनदानद
स्तदिह न तया गूढः कोपो न च प्रकटीकृतः ॥

(प्रविश्य)

**मृणालिका**— महाभाओ एव्वं अणुगेहादु मह पिअसहिं

[महाभाग एवमनुगृह्णातु मम प्रियसखीम् ।]

[इति राज्ञः कर्णे कथयति ।

**राजा**— मृणालिके, साधीयानयं पन्थाः यदि निरन्तरायो भवेत् । भवतु । आदेशय भूमिकापरिच्छदप्रवेशमार्गम् ।

**मृणालिका**— इदो इदो ।

[इत इतः ।]

[इति निष्क्रान्ताः सर्वे ।

इति तृतीयोऽङ्कः ॥



# चतुर्थोऽङ्कः ॥

---

(ततः प्रविशति शृङ्खलाहस्ता कारण्डविका ।)

**कारण्डविका**— अहो देवीए करुणापरम्मुहदा, जं दाणिं कमळजं तवस्सिणिं णिअळेदुं पेसिदवदी । (पुरोऽवलोक्य) एसा सही महुअरिआ इदो एव्व आअच्छदि ।

[अहो देव्याः करुणापराङ्मुखता, यदिदानीं कमळजां तपस्विनीं निगळयितुं प्रेषितवती । एषा सखी मधुकरिका इत एवागच्छति ।]

(ततः प्रविशति मधुकरिका ।)

**मधुकरिका**— साहु देवि, चिन्तिदो बन्धणोवाओ ।

[साधु देवि, चिन्तितो बन्धनोपायः ।]

[इत्यनालोकितकेन सत्वरं गच्छति ।

**कारण्डविका**— (सरोषम्) हळा, अण्णारिसो दे दाणिं जोव्वणगव्वो, जं समीवट्ठिदं पि मं अणाळवन्ती धावेसि

[हळा, अन्यादृशस्ते इदानीं यौवनगर्वः, यत्समीपस्थितामपि मामनालपन्ती धावसि ।]

**मधुकरिका**— हळा कारण्डविए, मरिसेहि मरिसेहि । ण ळक्खिदासि मए चिन्दापरवसदाए ।

[हळा कारण्डविके, मर्षय मर्षय । न लक्षितासि मया चिन्तापरवशतया ।]

**कारण्डविका**— हला महुअरिए, मरिसिदम्, जं एक्को अवराहो णावराहो ।

[हला मधुकरिके, मर्षितम्, यदेकोऽपराधो नापराधः ।]

**मधुकरिका**— हला, किं पुव्वदिअहरत्तीए कमलआणदणविलोअणस्स णाअदासि ?

[हला, किं पूर्वदिवसरात्रौ कमलजानटनविलोकनाय नागतासि ?]

**कारण्डविका**— हला महुअरिए, देसन्दरगमागदकारण्डवकहिअणाणादेसकहासवणकोदूहलपरवसा णाअदम्हि ।

[हला मधुकरिके, देशान्तरमागतकारण्डवकथितनानादेशकथाश्रवणकौतूहलपरवशा नागताऽस्मि ।]

**मधुकरिका**— जुज्जइ ।

[युज्यते ।]

**कारण्डविका**— हला महुअरिए, किं कमलआणदणकोसल्लेण देवी परितोसिआ, जेण ताए एव्वं णिक्करुणदा ।

[मधुकरिके, किं कमलजानटनकौशलेन न देवी परितोषिता, येन तस्यामेवं निष्करुणता ।]

**मधुकरिका**— हला, किं वि ण जाणासि ?

[हला, किमपि न जानासि ?]

**कारण्डविका**— सहि, कहेहि । [सखि, कथय ।]

**मधुकरिका**— हला, पुव्वदिणरत्तीए सीदाकल्लाणणडणविलो-

अणसकुदुआ देवी जाणईभूमिआपरिग्गहस्स कमलअं, सिरि-रामभद्दभूमिआपरिग्गहस्स मिणालिअं अ आणत्तवदी ।

[हला, पूर्वदिनरात्रौ सीताकल्याणनटनविलोकनसकुतुका देवी जानकीभूमिकापरिग्रहाय कमलजाम्, श्रीराम-भद्रभूमिकापरिग्रहाय मृणालिकां च आज्ञप्तवती ।]

**कारण्डविका**— तदो तदो ।

[ततस्ततः ।]

**मधुकरिका**— तदो अ सा धुत्ता मिणालिआ भट्टिणा णिअलि-दम्हित्ति सअं एव्व अप्पाणं णिअलिऊण, सिरिरामभद्दभू-मिआपरिग्गहस्स भट्टारं णिओइदवदी ।

[ततश्च सा धूर्ता मृणालिका भर्त्रा निगलितास्मीति स्वय-मेवात्मानं निगळय्य, श्रीरामभद्रभूमिकापरिग्रहाय भर्तारं नियोजितवती ।]

**कारण्डविका**— अहो कुडिलदा मिणालिआए ।

[अहो कुटिलता मृणालिकायाः ।]

**मधुकरिका**— तदो अ णट्टणावदेसेण जाणईरूपधारिणीए क-मळआए पाणिं गह्णन्तो गहिअरामभद्दभूमिओ भट्टा तेहिं तेहिं अहिण्णाणेहिं णिउणं देवीए मुणिदो ।

[ततश्च नटनापदेशेन जानकीरूपधारिण्याः कमलजायाः पाणिं गृह्णन् गृहीतरामभद्रभूमिको भर्ता तैस्तैरभिज्ञा-नैर्निपुणं देव्या ज्ञातः ।]

**कारण्डविका**— अहो अञाहिदं भट्टुणो !

[अहो अत्याहितं भर्तुः !]

**मधुकरिका**— तदो अ तक्खणविजम्भमाणकोवाणलधूमाअन्तहिअआ भट्टिणी पुणो पुणो पणअपुव्वं अणुणिअमाणा अप्पसण्णव्व देवी अविलम्बिदं सअणघरं एव्व पविट्ठा ।

[ततश्च तत्क्षणजृम्भमाणकोपानलधूमायमानहृदया भर्त्री पुनः पुनः प्रणयपूर्वमनुनीयमाना अप्रसन्नैव देवी अविलम्बितं शयनगृहमेव प्रविष्टा ।]

**कारण्डविका**— सहि, तदो किं मन्तिदं देवीए ?

[सखि, ततः किं मन्त्रितं देव्या ?]

**मधुकरिका**— हला, किं अणेण पुट्ठेण । ण पारेसि तुमं एदं रहस्सं रक्खिदुम् ।

[हला, किमनेन पृष्टेन । न पारयसि त्वमेतद्रहस्यं रक्षितुम् ।]

**कारण्डविका**— सहि, कहिं वि ण पआसेमि । सवामि भट्टिणीए पादपीठेहिं ।

[सखि, कुत्रापि न प्रकाशयामि । शपामि भर्त्र्याः पादपीठाभ्याम् ।]

**मधुकरिका**— ता सुणुहि । (कर्णे) एव्वं विअ ।

[तच्छृणु । एवमिव ।]

**कारण्डविका**— साहु मन्तिदं देवीए ।

[साधु मन्त्रितं देव्या ।]

**मधुकरिका—** हला, किं तुए अणुट्ठिदो देवीणिओओ ?

[हला, किं त्वया अनुष्ठितो देवीनियोगः ?]

**कारण्डविका—** इदो गच्छम्मि ।

[इतो गच्छामि ।] [इति निष्क्रान्ता ।

**मधुकरिका—** (पृष्ठतोऽवलोक्य, साशङ्कम्) अम्हो पस्थ अज्जचक्कवाआसहधम्मआरिणी चक्कवाइआ णाम बम्हणी ! किं णाए इदं रहस्सं सुदं हवे ! होदु । जादं जादं । देवीणिओअं अणुचिट्ठेमि ।

[अहो ! अत्र आर्यचक्रवाकसहधर्मचारिणी चक्रवाकी नाम ब्राह्मणी । किमनया एतं रहस्यं श्रुतं भवेत् ? भवतु । जातं जातम् । देवीनियोगमनुतिष्ठामि ।]

[इति निष्क्रान्ता ।

॥ इति प्रवेशकः ॥

(ततः प्रविशति कामयमानावस्थो राजा ।)

**राजा—**

एकां बाहुलतां मृदुद्विगुणितां कृत्वा वलग्नाश्रयां
चेटीहस्तसमर्पितेतरभुजं केयूरसंधित्सया ।
अंसालम्बितकेशपाशमसकृन्निःश्वासकम्पस्तनं
तन्वङ्ग्याः स्वदतेऽधुनापि तदिदं तालावसानस्थितम् ॥

(सस्मरणम्) तदात्वे च तथा नाम क्रुद्धा देवी दिष्ट्या प्रसादिता । इतः परमियमेव केवलं कमलजा पुनः किमापन्नेति चिन्ता परिलुठति मे मनसि । (विचिन्त्य) आः, किमथापि

नागतः प्रियतमोदन्तविज्ञानाय गतः प्रियवयस्यः !

(ततः प्रविशति विदूषकः ।)

**विदूषकः**— एत्तिअं काळं कज्जपरवसदाए ण दिट्ठो पिअवअस्सो । दाणिं तद्दंसणोक्कण्ठिदाइ विअ मे अच्छिईइ । (परिक्रम्य) एसो वअस्सो । (उपसृत्य) जेदु वअस्सो मणोरहसिद्धीए ।

[एतावन्तं कालं कार्यपरवशतया न दृष्टः प्रियवयस्यः । इदानीं तद्दर्शनोत्कण्ठिते इव मे अक्षिणी । एष वयस्यः । जयतु वयस्यो मनोरथसिद्ध्या ।]

**राजा**— किं सफलोद्यमोऽसि ?

**विदूषकः**— किं चक्कवाओ वि विफलुज्जमो होइ ?

[किं चक्रवाकोऽपि विफलोद्यमो भवति ?]

**राजा**— तर्हि सखे, श्रोतुमिच्छामि ।

**विदूषकः**— दाणिं खु देवी एव्वं मन्तिदवदी, जह— हञ्जे महुअरिए, दाणिं तुह कामुअं भमरअं कमळआरुव्वधारिणं कदुअ दुल्लळिअकमळआमुसिअहिअओ सठो अज्जउत्तो परिणअविलम्बणेण अम्हेहिं वि वञ्चणिज्जो । अणन्तरं कुविदस्स तस्स दु णडणसमअवञ्चणा पडिबन्दी भविस्सदि त्ति । ता अहं भमरअं अण्णेसिदुं पत्थिदम्हित्ति कारण्डविआमुहाए महुअरिआए कहिदं त्ति बम्हणिमुहादो ओगमिअ, किं एत्थ पडिविहाणं त्ति चिन्तअन्तो माउळकमळाअरघरणिं कमळाळअं उद्दिसिअ देवीए ळिहिदं त्ति किं वि पत्तं विळिहिअ झत्ति भमरअं पेसिदवन्तोम्हि ।

[इदानीं खलु देवी एवं मन्त्रितवती, यथा— हञ्जे मधुकरिके, इदानीं तव कामुकं भ्रमरकं कमलजारूपधारिणं कृत्वा दुर्ललितकमलजामुषितहृदयः शठ आर्यपुत्रः परिणयविडम्बनेनास्माभिरपि वञ्चनीयः। अनन्तरं कुपितस्य तस्य तु नटनसमयवञ्चना प्रतिबन्धी भविष्यतीति। तदहं भ्रमरकमन्वेष्टुं प्रस्थितास्मीति कारण्डविकापृष्टया मधुकरिकया कथितमिति ब्राह्मणीमुखादवगम्य, किमत्र प्रतिविधानमिति चिन्तयन्मातुलकमलाकरगृहीणीं कमलालयामुद्दिश्य देव्या लिखितमिति किमपि पत्रं विलिख्य झटिति भ्रमरकं प्रेषितवानस्मि।]

**राजा**— नाद्याप्याश्वासकारणं पश्यामः। ततस्ततः।

**विदूषकः**— तदा अ इमं वुत्तन्तं मिणालिआए णिवेदिअ, 'अइ मिणालिए, कमलअं खणमेत्तं भमरअवेसधारिणिं करेहि। जं णं एव्व भमरअबुद्धीए कमलआरूवधारिणिं करिअ वअस्सं परिणाअअन्ती देवी सअं एव्व वञ्चिदा होदि त्ति आणवअन्तो भवन्तस्स समीवं आअदोम्हि।

[ततश्च इमं वृत्तान्तं मृणालिकायै निवेद्य, 'अयि मृणालिके, कमलजां क्षणमात्रं भ्रमरकवेषधारिणीं कुरु। यदेनामेव भ्रमरकबुद्ध्या कमलजारूपधारिणीं कृत्वा वयस्यं परिणाययन्ती देवी स्वयमेव वञ्चिता भवति' इत्याज्ञापयन्, भवतः समीपमागतोऽस्मि।]

**राजा**— साधु सखे, साधु ।

(प्रविश्य पटाक्षेपेण संभ्रान्ता)

**मृणालिका**— जेदु जेदु महाराओ ।

[जयतु जयतु महाराजः ।]

**विदूषकः**— अइ मिणालिए, अवि णाम अणुट्ठिअं मह वअणम् ?

[अयि मृणालिके, अपि नामानुष्ठितं मम वचनम् ?]

**मृणालिका**— तं उण अणुट्ठिदम् । दाणिं उण अण्णं अच्चाहिदम् ।

[तत्पुनरनुष्ठितम् । इदानीं पुनरन्यदत्याहितम् ।]

**राजा**— (सोद्वेगम्) किं किम् ?

**मृणालिका**— अज्ज खु णट्टणसमअपच्चक्खिदमहाराआणुराअं कमलअं णिअलिऊण काराघरे ठावेदुं देवी ववसिदेत्ति सुणिअ संभन्ता इदो आअदम्हि ।

[अद्य खलु नटनसमयप्रत्यक्षितमहाराजानुरागां कमलजां निगलय्य कारागृहे स्थापयितुं देवी व्यवसितेति श्रुत्वा संभ्रान्ता इत आगतास्मि ।]

**राजा**— (सविषादम्) वयस्य, किमत्र प्रतिविधानम् ?

**विदूषकः**— मा भाएहि । दंसणिज्जा देवीए माआकमळआ ।

[मा बिभीहि । दर्शनीया देव्यै मायाकमलजा ।]

**राजा**— अहो प्रतिभा वयस्यस्य ! कः कोऽत्र भोः ?

(प्रविश्य)

**दौवारिकः**— आज्ञापयतु देवः ।

**राजा**— वेत्रहस्त, दर्शनीया मायाकमलजा मृणालिकायै ।

**दौवारिकः**— तथा ।

[इति निष्क्रान्तो मृणालिकया सह ।

**विदूषकः**— वअस्स, णचिराअ आअमिस्सदि देवीपरिआरिआ तुह परिणअणमहूसवं विण्णवेदुम् ।

[वयस्य, नचिराय आगमिष्यति देवीपरिचारिका तव परिणयनमहोत्सवं विज्ञापयितुम् ।]

(प्रविश्य)

**मधुकरिका**— जेदु भट्टा ।

[जयतु भर्ता ।]

**विदूषकः**— महुअरिए, किं वि हिअआसेअणअं वत्तुकामेव्व मुहप्पसादेण पडिभासि ।

[मधुकरिके, किमपि हृदयासेचनकं वक्तुकामेव मुखप्रसादेन प्रतिभासि ।]

**मधुकरिका**— अह इं । [अथ किम् ।]

**राजा**— कथ्यतां तावत् ।

**मधुकरिका**— भट्टा, देवी विण्णवेदि । जह— अज्जउत्त, जा उण कमळआ णाम दारिआ, सा चक्कवट्टिघरिणी भविस्सदि त्ति सामुद्दिअलक्खणविअक्खणेहिं कहिअं । ता ताए अज्जउत्तेण विणा अण्णो वरो ण जोग्गो, जेण अत्तणो सिरी अण्णस्स हत्थे ण पडिवादइणिज्जा । किं अ, ताए बद्धाणुराओ अज्जउत्तो त्ति णद्दणसमए एव्व पच्चक्खीकिदम् । ता णं परिणेदु

अज्जउत्तो । ण संकिदव्वं किं त्ति देवी सवत्तिसमाअमं अणुमण्णइ त्ति । जं भट्टिणो पिअं, तं किल कुलवहूणं पिअम् । ता अवस्सं अज्ज पओसे विसहळग्गम्मि केळीपासादं अळंकरेदु अज्जउत्तो त्ति ।

[भर्तः, देवी विज्ञापयति । यथा— आर्यपुत्र, या पुनः कमललज्जा नाम दारिका, सा चक्रवर्तिगृहिणी भविष्यतीति सामुद्रिकलक्षणविचक्षणैः कथितम् । तत् तस्या आर्यपुत्रेण विना अन्यो वरो न योग्यः; येनास्मान् श्रीरम्यस्य हस्ते न प्रतिपादनीया । किं च, तस्यां बद्धानुरागं आर्यपुत्र इति नटनसमय एव प्रत्यक्षीकृतम् । तदेनां परिणयतु आर्यपुत्रः । न शङ्कितव्यं किमिति देवी सपत्नीसमागममनुमन्यत इति । यद्भर्तुः प्रियम्, तत्किल कुलवधूनां प्रियम् । तदवश्यमद्य प्रदोषे वृषभलग्ने केळीप्रासादमलंकरोत्वार्यपुत्र इति ।]

**राजा—** नातिक्रमणीयवचना हि देवी । मधुकरिके, गच्छाग्रतः । आवामप्यनुपदमेवागच्छावः ।

**मधुकरिका—** तह । [तथा ।]

[इति निष्क्रान्ता ।]

**विदूषकः—** वअस्स, भवन्तं वञ्चिदुकामा देवी सअं एव्व वञ्चिदा भविस्सदि ।

[वयस्य, भवन्तं वञ्चयितुकामा देवी स्वयमेव वञ्चिता भविष्यति ।]

**राजा**— यावत्कार्यसिद्धि न मोदामहे ! यतः श्रेयांसि बहुविघ्नानि भवन्ति ।

**विदूषकः**— किं अदो वरं वि संदेहो ?

[किमतः परमपि संदेहः ?]

**राजा**— (सोत्सुक्यम्)

**कल्पयति क्षणमचिराभिवेष यातेऽस्य परिजने देव्याः।**
**कल्पयति क्षणमेष प्रसूनधन्वापि सायकैः प्रहरन् ॥**

**विदूषकः**— (विलोक्यावलोक्य) वअस्स, अदिक्कमदि मङ्गलिओ मुहुत्तो । ता एहि, गच्छम्हो केळीपासादम् ।

[वयस्य, अतिक्रामति माङ्गलिको मुहूर्तः । तदेहि, गच्छावः केळीप्रासादम् ।]

**राजा**— तदग्रतो गम्यताम् ।

**विदूषकः**— इदो इदो ।

[इत इतः ।]

[उभौ परिक्रामतः ।

**राजा**— (पुरोऽवलोक्य) सखे, समागताः स्मः केळीप्रासादम् । तमेनमारुह्य देव्याः समागमं प्रतिपालयावः ।

[उभावारोहणनाटितकेन उपविशतः ।

(नेपथ्ये नूपुरध्वनिः ।)

**विदूषकः**— (विलोक्य) वअस्स, एसा दे पिअदमा देवी अणुसरन्ती इदो एव्व आअच्छदि ।

[वयस्य, एषा ते प्रियतमा देवीमनुसरन्ती इत एवागच्छति ।]

[राजा सकौतुकमवलोकयति ।

(ततः प्रविशति देवी कमलजा मधुकारिका मृणालिका विमनतश्च परिवारः ।)

**देवी**— हञ्जे मधुअरिए, पेक्ख दे कामुअस्स भमरअस्स सुसिलिट्ठं वहूवेसं ।

[हञ्जे मधुकारिके, पश्य तव कामुकस्य भ्रमरकस्य सुश्लिष्टं वधूवेषम् ।]

**मधुकारिका**— (अपवार्य) भट्टिणि, एसो भट्टा दुद्धधिए मज्जारो विअ कंखिअं कमलआबुद्धीए णं भमरअं पुलोअन्तो आअच्छइ । ता णं अणुग्गाहिअम्ह मम्म परिहसामो ।

[भट्टिनि, एष भर्ता दुग्धधिया मार्जार इव काङ्क्षितं कमलजाबुद्ध्या एनं भ्रमरकमवलोकयन्नागच्छति । तदेनमनुद्घाटितमर्म सकपरिहसामः ।]

**कमलजा**— (जनान्तिकम्) हळा मिणालिए, वेवइ मे हिअअं णं वि वअणं देवी मुणिस्सदित्ति ।

[हला मृणालिके, वेपते मे हृदयमेनामपि वचनं देवी ज्ञास्यतीति ।]

**मृणालिका**— (जनान्तिकम्, निमित्तं सूचयित्वा) सहि, मा भाएहि । सूअआदि हि दे वामक्खिप्फुरणं सण्णिहिदं सोहग्गम् ।

[सखि, मा बिभीहि । सूचयति हि ते वामाक्षिस्फुरणं संनिहितं सौभाग्यम् ।]

**विदूषकः**— (कमलजां निर्वर्ण्य, अपवार्य) वअस्स, सोहइ से कमलआए वेआहिअणेवच्छलच्छी । पुढमं एदं पेक्ख—

सिन्दूरमई रेहा समआ सीमन्तमरणिमाधाइ ।

[वयस्य, शोभतेऽस्याः कमलजाया वैवाहिकनैपथ्यलक्ष्मीः । प्रथममेतत्पश्य—

सिन्दूरमयी रेखा समया सीमन्तसरणिमाभाति ।]

**राजा**— अनुरक्तयोर्मम दृशोर्मरीचिवीचीव संलग्ना ॥ ३ ॥

**विदूषकः**— (अपवार्य) परिसुम्बिआ मह उप्पेक्खा वअस्सेण । इमं उण पेक्ख—

हरिणमदतिलअबिन्दू राअइ सुअरमणीमुहे रुइरे ।

[परिचुम्बिता ममोत्प्रेक्षा वयस्येन । इमं पुनः पश्य—

हरिणमदतिलकबिन्दू राजति सुदतीमणीमुखे रुचिरे ।]

**राजा**—

सुहृदा शशिना विधृतं माणिफलकमिवाङ्कमपरिवीरस्य ॥ ४ ॥

**विदूषकः**— अहो मए सह एक्कविअसिअदा वअस्सस्स !

[अहो मया सहैकार्थविषयता वयस्यस्य !]

(अन्यतो दर्शयन्)

ओदंसणीणीरअकलिकियमधोमुडी भाइ ।

[अवतंसनीलनीरजकलिकियमधोमुखी भाति ।]

**राजा**— आरूढकर्णशिखरा निरीक्ष्य दृगेवमेव त्रपातेव ॥

**विदूषकः**— (अपवार्य) अदो वरं णत्थि मे अत्थकप्पणाणेउणी ।
[अतः परं नास्ति मे अर्थकल्पनानैपुणी ।]

**राजा**— (निरूप्य, अपवार्य)

कालिन्दीजलवेणिकापरिणतिः कान्तामणेर्वेणिका
सीमन्तोऽपि सरस्वतीलहरिका सिन्दूररागारुणः ।
मुक्ताचारुललन्तिकारुचिरियं मूर्तेव मन्दाकिनी
मज्जन्तीह मदीयलोचनयुगी मन्येऽनिमेषायते ॥ ६ ॥

किं च,

सुदत्या लावण्यस्रुतिरनघकेशोच्चयघना-
द्गलन्तीयं मुक्तामणिमयललन्तीकपटतः ।
निलीना भ्रूवल्लीनिकटभुवि नासापुटनिभ-
प्रणालीतो मुक्ताफलवपुरभिष्यन्दत इव ॥ ७ ॥

[देवी राजानमुपसर्पति ।

**राजा**— अपि नाम कुशलं देव्यै !

**देवी**— अज्ज अज्जउत्तदंसणेण ।
[अद्य आर्यपुत्रदर्शनेन ।]

**विदूषकः**— सोत्थि भोदीए ।
[स्वस्ति भवत्यै ।]

[देवी परिजनमवलोकते । परिजन आसना-
न्युपहरति । सर्वे यथोचितमुपविशन्ति ।

**देवी**— (सान्तस्मितम्) अज्ज चक्कवाअ, दाणिं कमळआपदाणेण अज्जउत्तं पीणेदुं इच्छम्हि ।

[आर्य चक्रवाक, इदानीं कमलजाप्रदानेनार्यपुत्रं प्रीणयितुमिच्छामि ।]

**विदूषकः**— जुत्तं णिमं सदृशं णिमं पतिदेवदाए देवीए । ता किं विळम्बीअदि ? अदिक्कामदि मुहुत्तो ।

[युक्तं न्वेतत् सदृशं न्वेतत्पतिदेवताया देव्याः । तत्किं विलम्ब्यते ? अतिक्रामति मुहूर्तः ।]

**देवी**— (कमलजां हस्ते गृहीत्वा, सान्तर्हासम्) अज्जउत्तो इमं वि कमलअं इदो वरं मणिविसेसं पेक्खदु ।

[आर्यपुत्र इमामपि कमलजामितः परं मणिविशेषां पश्यतु ।]

[इति कमलजाहस्तं राज्ञो हस्ते समर्पयति ।
राजा साध्वसं नाटयति ।

**देवी**— (अपवार्य) हञ्जे महुअरिए, पेक्ख अत्तणो कामुअं अज्जउत्तेण परिणिज्जन्तम् ।

[हञ्जे मधुकरिके, पश्यात्मनः कामुकमार्यपुत्रेण परिणीयमानम् ।]

**विदूषकः**— (अपवार्य) वअस्स णाअं सज्झसकाळो अणुहव चिरकंखिअं पिअदमाकरग्गहणमहूसवम् ।

[वयस्य, नायं साध्वसकालः । अनुभव चिरकाङ्क्षितं प्रियतमाकरग्रहणमहोत्सवम् ।]

**राजा—** (स्वगतम्)

> अद्य प्रसन्नो भगवान्मनोभू-
> 
> रद्यैव मे जन्म न निष्फलं च ।
> 
> अद्य स्वयं मे फलितं तपोभि-
> 
> र्गृह्णामि पाणौ यदिमां मृगाक्षीम् ॥ ८ ॥

[इति कमलजां पाणौ गृह्णाति ।

**कमलजा—** (सात्त्वमलज्जां नाटयन्ती) अज्ज चरिअत्थम्हि ।
[अद्य चरितार्थास्मि ।]

**विदूषकः—** (अपवार्य) वअस्स, अज्ज फलिअं मह णीदिकप्पलदाए ।
[वयस्य, अद्य फलितं मम नीतिकल्पलतया ।]

**राजा—** साधु सखे, साधु ! निर्व्यूढं मे जन्मसाफल्यम् ।

**मृणालिका—** (स्वगतम्) अज्ज मे अच्छीओ सफळाओ । अव्वहिबन्धं अ भअमिदम् ।
[अद्य मे अक्षिणी सफले । अप्रतिबन्धं चावसितम् ।]

**देवी—** (सान्तर्हासम्) अज्जउत्त, वड्ढसे अहिमदवहूलाहेण ।
आर्यपुत्र, वर्धसे अभिमतवधूलाभेन ।

[राजा सलज्जं तिष्ठति ।

**विदूषकः—** उवट्ठिदो ऊसवो मह जीहाए, जं मङ्गळसमए मोदअखण्डाइं बह्मणस्स देयाइं ।

[उपस्थित उत्सवो मम जिह्वायाः, यन्मङ्गलसमये मोदक-
खण्डानि ब्राह्मणाय देयानि ।]

[इति सहस्ततालं नृत्यति ।

(प्रविश्य ।)

**दौवारिकः**— देवि, देवमातुलकमलाकरवल्लभाया भवत्कनिष्ठ-
मातुः कमलालयायाः सकाशादागतः पत्रसंपुटिकाहस्तो भ्रमरको
द्वारि तिष्ठति ।

**देवी**— (पर्याकुला) कहिं दाणिं भमरओ! जं कं वि भमरओ त्ति
मुणिअ भणिअइ ।

[कुत्रेदानीं भ्रमरकः? यं कमपि भ्रमरक इति ज्ञात्वा
भण्यते ।]

**दौवारिकः**— किमाधुनिकोऽहम, येन भ्रमरकं न जानामि ?

**विदूषकः**— (सस्मितम्) होदु, पवेसअ, पेक्खम्हे ।
[भवतु, प्रवेशय, पश्यामः ।]

**दौवारिकः**— तह ।
[तथा ।]

[इति निष्क्रान्तः ।

(प्रविश्य)

**भ्रमरकः**— जेदु भट्टा, भट्टिणी अ ।
[जयतु भर्ता भट्टिनी च ।]

**कमलजा**— (अपवार्य) हळा मिणालिए, वेवइ मे हिअअं ।
[हला मृणालिके वेपते मे हृदयम् ।]

**मृणालिका**— (अपवार्य) अए भीरुए, किं अदो वरं करि-स्सदि देवी !

[अयि, भीरु, किमतः परं करिष्यति देवी !]

**देवी**— (भ्रमरकं विलोक्य, सविषादम्) हञ्जे महुअरिए, किं एदं ! अज्जउत्तं परिहसिदुकामा अहं एव्व परिहासपत्तदं णीदा।

[हञ्जे, मधुकरिके, किमेतत् ! आर्यपुत्रं परिहसितुकामा अहमेव परिहासपात्रतां नीता ।]

**मधुकरिका**— (अपवार्य) भट्टिणि, का णु खु काराघरे णिग-डिदा हवे ?

[भट्टिनी, का नु खलु कारागृहे निगडिता भवेत् ?]

**देवी**— (अपवार्य) सा वि मह दोब्भग्गेण माआ हविस्सदि ।

[सापि मम दौर्भाग्येण माया भविष्यति ।]

(संभ्रान्ता प्रविश्य)

**कारण्डविका**— (देवीमुपसृत्य, अपवार्य) भट्टिणि, काराघरं णि-गडिदा कमलआ माआ संवुत्ता ।

[भट्टिनि, कारागृहे निगडिता कमलजा माया संवृत्ता ।]

**देवी**— (सखेदं निःश्वस्य) चिन्तिदाणुरूवं एदं वि संवुत्तं ।

[चिन्तितानुरूपमेतदपि संवृत्तम् ।]

**विदूषकः**— (सपरिहासम्) भमरअ, अहो दे गंदिचादुरी । पक्ख कळ पादिदा स ।

[भ्रमरक, अहो ते गतिचातुरी । प्रत्यूषे किल प्रस्थितोऽसि ।]

**देवी**— (स्वगतम्) सच्चहं अणेण हदासेण वञ्चिदम्हि ।

[सर्वथानेन हताशेन वञ्चितास्मि ।]

**मधुकरिका**— (स्वगतम्) णूणं तं एदं रहस्सं ताए एव्व बम्हणीए सुदम् ।

[नूनं तदेतद्रहस्यं तयैव ब्राह्मण्या श्रुतम् ।]

**भ्रमरकः**— भट्टिणि, एसा पत्तिआ ।

[भट्टिनि, एषा पत्रिका ।] [इत्यर्पयति ।]

**राजा**— अपि कुशलं मभर्तुर्मातुलान्याः ?

**भ्रमरकः**— अह इं ।

[अथ किम् ।]

**कमलजा**— (दीर्घं निःश्वस्य स्वगतम्) चिरस्स कालस्स इदं सुदम् । को उण पत्तत्थो हवे ।

[चिरस्य कालस्यैतत् श्रुतम् । कः पुनः पत्रार्थो भवेत् ।]

**देवी**— (पत्रमुन्मुच्य वाचयति) भद्दं होदु । कमलालआ वच्छाए मारिसिआए आसिआपुव्वं पत्तिअं पेसेदि । अणुवाइदो अ मए कमलिणीवुत्तन्तो दाणिं कीरिसो त्ति तुए संपेसिदा पत्तिआ । दाणिं उण वञ्जोइमंस्सोहपव्भट्ठा वच्छा कमलिणी तुह एव्व समीवे कमळएत्ति किअणामहेआ सह सहीए मिणालिआए वट्टइ त्ति अहिउत्तेहिं चोरेहिं णिउणं विआणिअ बहुदा कहिअं सुणिअ आणन्दपरवसम्हि । मा उण वच्छा कंचण काळं परप्प-

स्मरणं अणुहविअ चक्कवट्टिघरिणी हविस्सदि त्ति देवण्णेहिं सेसवे एव्व कहिदम् । ता दाणिं सा वच्छा तुए एव्व कस्स वि चक्कवट्टिणो पडिवादणिज्जा' ।

'भद्रं भवतु । कमलालया वत्सायै सारसिकायै आशीः-पूर्वं पत्रिकां प्रेषयति । अनुगृहीता च मया कमलिनीवृत्तान्त इहार्थे कीदृक इति त्वया संप्रेषिता पत्रिका । इदानीं पुनर्वैकोटकलकर्णोऽभ्यर्थितान्तःस्मृत्वा वत्सा कमलिनी तवैव समीपे कमलालत्ति कृतनामधेयो महमस्या मृणालिकया वर्धत इत्यभिज्ञानैराचारैर्निपुणं विचार्य बहुधा कथितं श्रुत्वा आनन्दपरवशास्मि । सा पुनर्वत्सा कंचन कालं परप्रेष्यभावमनुभूय चक्रवर्तिगृहिणी भविष्यतीति दैवज्ञैः शैशव एव कथितम् । तदिदानीं सा वत्सा त्वयैव कस्यापि चक्रवर्तिनः प्रतिपादनीया' ।

**राजा**— (स्वगतम्) कस्यापि चक्रवर्तिन इत्युक्तिभङ्गचा ममैवेति ध्वनितम् ।

**देवी**— (सानन्दम्) अए कमलए, मह भइणी कमलिणी जादासि । एहि, एहि । देहि परिरम्भं ।

[अये कमलजे, मम भगिनी कमलिनी जातासि । एहि, एहि । देहि परिरम्भम् ।]

[इति गाढमालिङ्गति ।

**राजा**— किमियं सा मातुलसुता कमलिनी ?

**विदूषकः**— महाकुळप्पसूर्दि विणा कहं होइ एआरिसं सोन्देरं ?

[महाकुलप्रसूतिं विना कथं भवत्येतादृशं सौन्दर्यम् ?]

**परिजनः**— भट्टिणि, एहि एहि, सहेहि सहेहि अम्हाणं अण्णाणकिदं अवराहजाळं ।

[भट्टिनि, एह्येहि, सहस्व सहस्वास्माकमज्ञानकृतमपराधजालम् ।]

**कमलजा**— (अपवार्य) सहिओ, किं भट्टिणित्ति मे ळज्जं करेह ।

[सख्यः, किं भट्टिनीति मे लज्जां कुरुथ ।]

**देवी**— अइ मिणाळिए, किंत्ति एत्तिअं काळं इयं कमळिणि त्ति ण भणिदम् ?

[अयि मृणालिके, किमित्येतावन्तं कालमियं कमलिनीति न भणितम् ?]

**मृणालिका**— देवि, एदाए कंचण काळं परप्पेस्सदा अणुहोदव्वत्ति अयं अत्थो मए वि सुणीअदि । ता तुह पेस्सदेव्व एदाए वरं त्ति मए गुत्तं एदं रहस्सं ।

[देवि, एतया कंचन कालं परप्रेष्यतानुभवितव्येत्ययमर्थो मयापि श्रूयते । तत्तव प्रेष्यतैव एतस्या वरमिति मया गुप्तमेतद्रहस्यम् ।]

**देवी**— होदु एदम् । कहं उण तुम्हाणं अच्छोदसरप्पुण्डरीए अवत्थाणं आसि ?

[भवस्वेतत् । कथं पुनर्युवयोरच्छोदसरःपुण्डरीके अवस्था-नमासीत् ?]

**मृणालिका**— स किल बओडहदओ अन्तवालसारसेसेणकोलाहलं सुणिअ अम्हे अच्छोदसरपुण्डरीअम्मि णिक्खिविअ पलाइदो ।

[स किल बकोटहतकोऽन्तपालसारसेनाकोलाहलं श्रुत्वा आवामच्छोदसरःपुण्डरीके निक्षिप्य पलायितः ।]

**राजा**— युज्यते ।

**देवी**— भमरअ, मह वअणादो विण्णावणिज्जा कणिट्ठमाद। कमलाळआ— वच्छा कमलिणी अज्जउत्तस्स दिण्णेत्ति ।

[भ्रमरक, मम वचनाद्विज्ञापनीया कनिष्ठमाता कमला-लया— वत्सा कमलिनी आर्यपुत्राय दत्तेति ।]

**भ्रमरकः**— तह ।

[तथा ।] [इति निष्क्रान्तः ।]

**देवी**— अज्जउत्त, किं दे भूओ पिअं उवहरामि ?

[आर्यपुत्र, किं ते भूयः प्रियमुपहरामि ?]

**राजा**—

त्वं सुप्रसन्ना विजितो बकोटः
प्रतिष्ठितोऽजायत मातुलोऽपि ।
इयं च लब्धा भगिनी तवाद्य
संपादनीयं कियतः परं नः ॥ ९ ॥

तथापीदमस्तु—

साहित्ये रमतां मनः सुमनसां सन्तो भजन्तां सुखं
सोमालंकृतशेखरे भवतु मे वामाङ्गजानौ मतिः ।
धीरश्रीचिनचम्पयाच्युतधराधौरेयभाग्योन्नतौ
राज्यं श्रीरघुनाथनायकविभौ रज्येत्सहस्रं समाः ॥

[इति निष्क्रान्ताः सर्वे ।

इति दन्तिद्योतिदिवाप्रदीपाङ्कविश्वामित्रवंशमुक्ताफलसर्वतन्त्रस्वतन्त्र-
श्रीकृष्णभट्टपौत्रलक्ष्मीभवस्वामिभट्टतनूजविश्वजिदतिरात्रयाजि-
श्रीसत्यमङ्गलरत्नखेट श्रीनिवासदीक्षिततनयस्य कामा-
क्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरु-
चरणसहजतालब्धविद्यावैशारद्यस्य श्री-
राजचूडामणिदीक्षितस्य कृतिषु

**कमलिनीकलहंसाभिधाना**

**नाटिका संपूर्णा ॥**